ाध्यन्दिनशाखीया

5.2

# ोधिनी शिक्षा

## सुबोधिन्याख्यया टुप्टीकया
### सचित्रेण हिन्दीभावामयेन परिशिष्टेन च सहिता





श्रीगोपालचन्द्रमिश्रः
( का. हि. वि. वि. )

मिश्रानुसन्धानग्रन्थमाला—७

शुक्लयजुर्वेदमाध्यन्दिनशाखीया

# सम्प्रदायप्रबोधिनी शिक्षा

'सुबोधिनी' टिप्पटीकया

सचित्रेण हिन्दीभाषामयेन परिशिष्टेन च सहिता





सेयम्—

माध्यन्दिनीयशिक्षासु प्रायोऽनुक्तानां साम्प्रदायिकविषयाणां सङ्ग्रहपरा, अभिनवानुसन्धानपद्धतिसन्दृब्धा, अनितरसाधारणी सटीका सपरिशिष्टा च शिक्षा

पं० श्रीगोपालचन्द्रमिश्र

वेद-धर्मशास्त्र-मीमांसादर्शनाचार्य—एम. ए. इत्येतेन

विरचिता



# Foreword

The Sampradāya–prabodhini śikṣā by Pt. Gopal Chandra Mishra, Veda-Dharm-aśāstra-Mīmāṁsā - Ācārya, M. A. of the Sanskrit Mahāvidyālaya, Banaras Hindu University, is a contribution in the field of Vedic Phonetics. The recitation of the Vedas has been a continuous process of oral transmission by the teacher to his loyal disciples. Such recitation, however, varied not only from Veda to Veda but also among the teachers of the same Veda. Thus arose the need for standardization of recitation. As a result, came into existence the Prātiśākhya literature. It found due recognition as an indispensable aid to the study of the Vedas.

The present work belongs to the Mādhyandina School of the White Yajur-veda. The Yājñavalkya śikṣā on the same is obscure on some points and is incomplete in some respects. The present venture has sought to remove these lacunae, in the light of facts from the living tradition of Vedic recitation. The task is amply rewarding, especially in face of constant decay of Vedic scholarship.

Pt. Mishra has renovated the Yājñavavalkya Śikṣā. He has adepted ten verses from the Original intact, and another nine verses with slight amendments. The rest is his. Comments under each verse have added to the value of the work.

The result is remarkable. Coming as it does from the hand of a scholar steeped in Vedic tradition, the work has become a focal point of both theory and practice—an authentic and comprehensive pronouncement on a subject highly technical and yet so important for the study of our ancient heritage.

S. Bhattacharya
Dr. Siddhevśara Bhaṭṭācārya M.A. (Hons.)
Ph. D. (Lond.), D. Litt. (Lille), Bar-at-Law (Gray's Inn), Kāvya-Tīrtha,
Nyāya-Vaiśeṣika-Ācārya
(Gold Medallist)
Mayūrbhañja Professor & Head of the
Department of Sanskrit & Pali,
Banaras Hindu University,
Varanasi—5.



# उपस्थापनम्

अथेदं शुक्लयजुर्वेदमाध्यन्दिनीयशाखायाः समुपलब्धासु शिक्षासु अनुक्तानां, स्पष्टतो वा अपरिज्ञापितानां, साम्प्रदायिकानां स्वरवर्णसम्बन्धिनां लेखनोच्चारणावगमानां सुखप्रतिपत्तये समुपस्थाप्यते सम्प्रदायप्रबोधिनी शिक्षा नाम ।

वेदाध्ययनं हि—गुरुमुखोच्चारणानूच्चारणमित्यध्ययनलक्षणात् गुर्वनुक्रमाद् गृह्यमाणो वेदवर्णराशिः साङ्गत्वाय कञ्चन शिक्षाशासनमपेक्षते । गुर्वनुग्रहादधीतवेदो हि पुरुषो वेदाङ्गानि शिक्षादीनि समभ्यस्यन् स्वीयं गुरुप्राप्त साम्प्रदायिकमध्ययनं शिक्षापार्षदाभ्यां सम्वादयति, प्राप्ते च संवादे परमं हृष्यति, दार्ढ्येनकिल स्वपरम्परां संरक्षयितुमुपदेष्टुं च प्रयतत इत्यस्ति वास्तविकः क्रमः । अथापि केचन पदार्थाः लेखन ( य-ष ) वचन (ष-ख) अवबोधन (पत्क्नी) फलाः शिक्षा-पार्षदादिषु अनुपलब्धाः स्पष्टमपरिज्ञाता वा तिष्ठन्त्येव सर्वशाखाध्येतृषु । एतेषां साम्प्रदायिकानां पदार्थानां सविकृतिवेदपाठाध्येतॄणां वैदिकवरेण्यानामर्थे नास्त्येतादृश्याः शिक्षाया आवश्यकता । अत एव चाद्य यावत् न पूर्वाचार्यैः साम्प्रदायिकपदार्थानामेकत्र कश्चन कृत्स्नः सङ्ग्रहः समुपास्थापि । परमधुना तु सविकृतिवेदपाठाध्येतारो विरला एव प्रादुर्भवन्ति, वेदानामभ्यासोऽपि न पूर्ववज्जागर्ति, न च वेदाध्ययनाधिकारिणः स्वजन्माधिकारावाप्तस्वाध्यायसंरक्षणाय प्रयतन्ते, न हि भीषयति समधिकृतानपि पातित्यभयम् , न च लभ्यते पूर्वासादितं लोकसम्मानं वेदाभ्यासिभिः, न चोपयुज्यते स वेदाभ्यासः साम्प्रतिकशिक्षाक्षेत्रीयवृत्तिषु, एवमधुना वित्तैषणायां लोकैषणायां चाननुमतो वेदाभ्यासः अग्रजन्मसु अपि क्षीयत एवेति मनः क्षोभयति, ह्रसयति च साम्प्रदायिकपदार्थावबोधम् ।

अधुना हि वेदाक्षराणामभ्यासे परिश्रममकुर्वाणाः वेदार्थमधिजिगांसन्तः सन्ति कतिपये संस्कृतश्रद्धावन्तो भारतीयाः। एते हि विषयार्णवे सर्वत्र सन्देहज्ञापनेन पङ्कद्वयमुपस्थाप्य देवदानवदलावाविर्भावयन्तः श्रमविष्णुसहायाः अनुसन्धानामृतमुपस्थापयितुं प्रयतन्ते। तदर्थं स्वपूर्वजलिखितपुस्तकाक्षराणि मन्दराचलमिवाचलं विश्वसन्ति। तमेव मन्थानं कृत्वा नेत्रायितप्रज्ञया कञ्चन बहुलकल्पनात्मकमावर्तनं प्रदर्शयन्ति। ततश्च यदि तत्तच्छाखासु प्रसृतानां साम्प्रदायिकानां पदार्थानां सङ्ग्रहो यथाकथञ्चिन्न लेखरूपतामापाद्यते, तर्हि कालान्तरे तस्य चर्चैव अप्रामाणिकी अश्रद्धेया अननुसन्धेया च स्यात्।

एतदेव सर्वमनुलक्ष्य नवीनेषु भूष्णुसु वेदाभ्यासकर्तृषु प्रामाणिकतायाः श्रद्धेयतायाश्च दृढीकरणाय, अनुसन्धातृणां च सौकर्याय सम्प्रदायपरिचायनाय च लघुकायापीयं गभीरतत्वबोधिनी सम्प्रदायप्रबोधिनी नाम शिक्षा स्वीयमतिशयमावश्यकतां च न तिरोदधाति।

शिक्षाः पार्षदम् व्याकरणमिति त्रितयं स्वरवर्णप्रयोगोपयोगिलक्षणान्निर्दिशन्तोऽपि सम्प्रदायमन्तरा न तयोः प्रयोगपद्धतिं परिचाययितुमीशते।

सम्प्रदायो हि—पारम्परिकक्रमेण समायातः अनितरसाधारणो निर्देशः। स हि माध्यन्दिनशाखीयेषु बहुशः वर्तत एव। स एव हि सम्प्रदायः अत्र सङ्कलितो विदुषामध्येतृणामनुसन्धातृणां च सन्तोषाय स्यादित्यहं सम्भावयामि।

एतत्तु अवश्यमवधेयं—यत् मन्त्रब्राह्मणात्मकवेदशब्दराशावत्र मन्त्रात्मकवेदस्यैव साम्प्रदायिकाः पदार्थाः सङ्कलिताः। ब्राह्मणग्रन्थाध्ययनलेखनसम्प्रदायस्तु नात्र सङ्गृहीतः, सोऽपि यथाकालमुपस्थापयिष्यते। एवमत्रोपस्थापनशीर्षके-शिक्षाशब्दव्याख्यानम्, शिक्षाशास्त्रपरिचयः, शिक्षाशास्त्रस्य महत्वम्, शिक्षाशास्त्रीयो वाङ्मयश्चेत्यादयो



विषया अपि प्रासङ्गिकतां नातिक्रामन्ति, तथापि तेषां विशद विवेचन-मेतया साम्प्रदायिकपदार्थमात्रप्रतिपादनपरया शिक्षया सह न शोभेतेति तेऽपि, अन्येऽपि च पदार्थाः कालान्तरे उपस्थापयितुमभिलषामि ।

एतस्यां शिक्षायां के के विषयाः सङ्कलिता इति तु विषयसूच्या स्पष्टं भवतीति पिष्टपेषणधिया नेह विव्रियन्ते ।

मदीय विंप्रकीर्णपत्राणां 'प्रेसकापी' लेखकेन केचन समपेक्षितांशाः असमाहिततया परित्यक्ता इति ते 'वर्द्धनीयः पाठः' इति शीर्षके ज्ञापिताः विद्वद्भिः कृपयानुगृहीतव्याः ।

अद्य यावन्मुद्रितासु शिक्षासु ग्रन्थान्तरेषु वा माध्यन्दिनीयेषु प्रद-र्श्यमाणानां हस्तस्थितीनां बोधनाय नैवंविधः कश्चन प्रयत्नः समादृतो येन सामान्यज्ञानवानपि संस्कृतज्ञो लक्षणस्य प्रयोगविधया प्रतिबोधं प्राप्नुयात् । तदर्थमत्र इदम्प्रथमतया २८ चित्राणि पं० ताराचन्द्र-शास्त्रिणामुत्साहेन सहयोगेन च परिशिष्टे सन्निवेशितानि । एवं हिन्दी-भाषानुरागिणां सन्मान्यजनानां वैदिकज्ञानवर्द्धनाय शिक्षाया अस्या विशेषांशानां राष्ट्रभाषायां तात्पर्यं परिशिष्टे संगृहीतमितीदं संस्क-रणस्य पुस्तकस्य च महत्त्वं व्यवस्थापयेदिति विश्वसिमि ।

अन्ते भगवन्तं पार्वतीपतिं विश्वेश्वरमभ्यर्थयामि यदस्माकं भार-तीयानां मनसि साङ्गस्य वेदस्य संरक्षणार्थमुत्साहं बलं च सम्प्रदायाद् विस्मृतप्रायं च शिक्षाशास्त्रं संवर्द्धयेदिति शिवम् ।

सुधीजनवशंवद :—

**श्रीगोपालचन्द्र मिश्रः**

# सम्प्रदायप्रबोधिनी शिक्षा

## विषय-सूची

## सङ्केत-सूची

च० व्यू० = चरणव्यूहः शौनकीयः [खण्डाङ्काः]

पा० शि० = पाणिनीयशिक्षा ( निर्णयसागरप्रेस बम्बईतः सिद्धान्तकौमुद्या सह मुद्रिता ) [श्लोकाङ्काः]

जै० = जैमिनीयपूर्वमीमांसादर्शनम्; [अध्याय–पाद–अधिकरणाङ्काः]

आ० ध० = आपस्तम्बधर्मसूत्रम् ( वाराणसीमुद्रितम् )

या० शि० = याज्ञवल्क्यशिक्षा ( शिक्षावल्लीटीकासहिता पशुपतीश्वर वाराणसीतः प्रकाशिता)—[पृष्ठाङ्काः]

तु० = तुलना क्रियताम् । 'श्लोकेऽस्मिन् यो हि भावः स तत्रापि वर्तते । अत्रत्या शब्दानुपूर्वी किंचिद् भिद्यते' इत्यभिप्रायेणायं सङ्केतः ।

द्र० = 'पूर्णोऽयं श्लोकस्ततः सङ्गृहीत' इत्यर्थे 'द्र०' सङ्केतः । द्रष्टव्यम् इति पूर्णः शब्दः ।

* = एतदुक्तविषयस्य स्पष्टज्ञानाय परिशिष्टे चित्रं द्रष्टव्यम् ।

सं० = संहिता, शुक्लयजुर्वेदमाध्यन्दिनशाखीया । [अध्याय—कण्डिकाङ्काः]

मनुस्मृतिः = निर्णयसागर प्रेस बम्बई मुद्रिता । [अध्याय—श्लोकाङ्काः]

पा० = पाणिनीयाष्टाध्यायी । [अध्याय—पाद—सूत्राङ्काः]

शु० प्रा० = शुक्लयजुः प्रातिशाख्यम् ( वाराणसीमुद्रितम् ) । [अध्याय—सूत्राङ्काः]

पा० गृ० = पारस्करगृह्यसूत्रम् ( खेमराज बम्बई मुद्रितम् ) [काण्ड—कण्डिका-सूत्राङ्काः]

## शुद्धाशुद्धिपत्रकम्

अवधेयम्—उदाहरणेषु (१) उदात्तादिस्वरचिह्नानां (२) विसर्गे अङ्गुलिनिक्षेपचिह्नानां (३) विशेषानुस्वारस्वरूपपरिचायकलिपीनां च मुद्रणालये पूर्वमनुपलभ्यमानता आसीदिति सुबोधिन्यां मुद्रिताः सङ्केता न विश्वसनीयाः । तेषां शुद्धं विश्वसनीयं च रूपमधो द्रष्टव्यम् ।

माध्यन्दिनीयवेदस्वरपरिचयार्थमुदाहरणानि-

१. हरिᳪं ओ३म् । वा- हरिः । ओ३म्

२. अम्बेऽ अम्बिकेऽम्बालिके

३. आहमजानि

४. बृहन्त्युष्णिहा

५. गर्भधिम्

६. गायत्री त्रिष्टुप्

७. गणानान्त्वा गणपतिᳪं हवामहे

८. जगत्यनुष्टुप्पङ्क्त्या सह

९. कपर्दिने च व्युप्तकेशाय च नमः

१० रथ्यो न रश्मीन्

११. छन्दाᳪंसि जज्ञिरे

१२. पुरुषᳪं सहस्राक्षः ?

१३. सूचीभिः

१४. मन्त्रो यजुः

१५. दृशान्नुदहार्य्यᳪं स दृष्टो

१६. मध्यावर्ति स्वरितसङ्केतो द्विधा – ८, ४

१७. दीर्घानुस्वारलेखो द्विधा – ᳪ, ᳫ.

अत्रेदमवधेयम्—एतेषामुदाहरणानामपेक्षितस्थलानि उदाहरणपूर्वस्थापिताङ्कक्रमतः एवं ज्ञातव्यानि—

१. पृ० ८ श्लोक २७, २८
२. पृ० १० श्लो० ४०, पृ० ११ श्लो० ४५
३. पृ० १० श्लो० ४०
४. पृ० १० श्लो० ४०, ११।४५; १२।५०; १३।५८
५. पृ० ११ श्लो० ४० टी०, ११।४५
६. पृ० १२ श्लो० ४६
७. पृ० १२ श्लो० ४७; १३।५३; १६।७७
८. पृ० १२ श्लो० ४८
९. पृ० १२ श्लो० ४९, १३।५४, १३।५५
१०. पृ० १३ श्लो० ५७
११. पृ० १६ श्लो० ७५
१२. पृ० १७ श्लो० ८१
१३. पृ० १७ श्लो० ८२
१४. पृ० १९ श्लो० ९२
१५. पृ० १२ श्लो० ५०
१६. पृ० १३ श्लो० ५५
१७. पृ० १६ श्लोक ७७

| पृ० | पं० | मुद्रितपाठः | शुद्धः पाठः |
|---|---|---|---|
| १ | १९ | नुगणो | नुगुणो |
| २ | ३ | तत्रशुक्लं | तत्र शुक्ले |
| २ | १५ | बङ्गीयेष | बङ्गीयेषु |
| २ | २३ | पदेष्टरा | पदेष्टुरा |
| ३ | ७ | संयतौ | संयतौ |
| ३ | ११ | श्लिष्टाङ्गुलं | श्लिष्टाङ्गुलं |
| ३ | २१ | अङ्गष्ठ | अङ्गुष्ठ |
| ४ | १४ | अत्रत्यापेक्षिता टीका | वर्द्धनीयपाठे द्रष्टव्या |
| ५ | ९ | अनन्तरं पठनीयः पाठः | वर्द्धनीयपाठे द्रष्टव्यः |

| | | | |
|---|---|---|---|
| ६ | ५ | अनन्तरमावश्यको भागः | वर्द्धनीयपाठे द्रष्टव्यः |
| ९ | ८ | एतदन्ते सामयिकः पाठः | ,, ,, |
| १० | ११ | मूले टीकायां चापेक्षितः पाठः | ,, ,, |
| १० | १७ | अन्तिमः पाठः | ,, ,, |
| १० | २१ | (२) स्वरिता | (२) आद्यस्वरितात् |
| ११ | १६ | (४) | (५) |
| ११ | १७ | चतुर्धा | पञ्चधा |
| ११ | २१ | योमध्य | योर्मध्य |
| ११ | २४ | चतुर्धा | पञ्चधा |
| ११ | २४ | अन्ते समपेक्षितः पाठः | वर्द्धनीयपाठे द्रष्टव्यः |
| १२ | १८ | (२) गणना | (२) गणाना |
| १२ | २२ | अपेक्षितः पाठः | वर्द्धनीयपाठे द्रष्टव्यः |
| १३ | १८ | अत्रत्यापेक्षितष्टीकाभागः | वर्द्धनीयपाठे द्रष्टव्यः |
| १४ | १३ | युज्जते | युञ्जते |
| १४ | २१ | स्पष्टज्ञापनाय | वर्द्धनीयपाठो द्रष्टव्यः |
| १५ | १ | मुद्रणो | मुद्रणे |
| १५ | १९ | अत्रत्या टीका | वर्द्धनीयपाठे द्रष्टव्या |
| १७ | १८ | द्वित्वश्रति | द्वित्वश्रुति |
| २२ | ९ | अपेक्षितोंऽशः | वर्द्धनीयपाठे द्रष्टव्यः |
| २४ | १६ | तदेतप्यु | तदेतदप्यु |
| २७ | ८ | २।५।१ | २।६।१ |
| २७ | १५ | संशोधितः पाठः | वर्द्धनीयपाठे द्रष्टव्यः |
| २८ | १५ | श्यकत्वात् | वश्यकत्वात् |
| २९ | ५ | येंषां | यासां |
| २९ | २४ | सङ्क्रम | सङ्क्रम |
| ३० | १ | पाठः | पाठाः |
| ३० | १७ | स्वरवण | स्वरवर्ण |
| ३१ | ५ | वर्णप्रकरणोपसंहारः | ( निष्कासनीयम् ) |

# वर्द्धनीयः पाठः

पृ० ४, श्लो० १२ पं० १४ सुबोधिनी—

अभ्याहननं नाम—कस्यचिद्वर्णस्य विशेषबलपूर्वकमुच्चारणम्। निर्हननं नाम—अधरदन्तावल्या निष्पीडनस्थित्या सर्ववर्णाना-मुच्चारणम्। गायनं नाम—लोकानुरञ्जनदृष्ट्या स्वरलहरी-समुत्पादनपुरःसरमुच्चारणम्। कम्पनंतु कण्ठस्थित्या विरामव्यवहित-प्रायवर्णोच्चारणरूपं प्रसिद्धमेव।

पृ० ५, श्लो० १८ अनन्तरं मूले—

संस्थायां शिष्यसामर्थ्यमपेक्ष्य गुरुणा पुरा।
कण्डिका भागतोऽर्द्धा वा विश्लिष्याध्याप्यते सदा ॥१८ क॥
चेदेकत्रागतो मन्त्रः संहितायां पुनर्भवेत्।
तदाध्याप्यः पूर्णमन्त्रः शिष्योऽप्यनुवदेत् सकृत् ॥१८ ख॥

सुबो० १८ ख—एतेन गुरुमुखोच्चारणानूच्चारणात्मकमध्ययनं सिद्ध्यति।

पृ० ६, श्लो० २० अनन्तरं मूले—

मन्त्रप्रतीकोऽर्धर्चो वा भागो वा पठ्यते यदा।
तदान्तिमः स्वरो ज्ञाप्यः परस्परसमाश्रयात् ॥ २० क ॥

सुबो०—२० क—गुणनिकायां, स्वाध्यायावसाने (श्लो०२६) वा यदा मन्त्रप्रतीकः, संस्थायाम् अर्धर्चः, कण्डिकाभागो वा यदाध्याप्यते तदान्त्यः उदात्तादिस्वरः बुद्धिस्थोच्चार्यमाणपरवर्णस्वरमभिलक्ष्य हस्तेन प्रदर्शनीयः इति।

पृ० ९, श्लो० ३३ अनन्तरं मूले—

अनभ्यासा—दधीतेर्वा विरहाद्ये स्वरान् मुधा।
दर्शयन्ति पराकृष्ट्यै ते ब्रह्मप्लाविनो ध्रुवम् ॥ ३३ क ॥

पृ० १०, श्लो० ३८ सुबोधिन्यामन्ते—

वेदरक्षायां वसन्तो ये वैदिकास्तेषां पूजा वसन्तपूजा।
शब्दसाधुत्वं लोकप्रसिद्धेरूहनीयम्।

पृ० १०, श्लो० ४० अनन्तरं मूले—

अनुदात्तयोर्द्वयोर्मध्ये गतोऽचिह्नश्च पञ्चमः ॥ ४० क ॥

सुबो०—४० क—(४) अनुदात्तयोर्मध्यगतो यथा—

अम्बे अम्बिके

पृ० ११, श्लो० ४५ सुबोधिन्यामन्ते 'द्विधा' इत्यनन्तरम्—

ऊर्ध्वगामी, वामगामी च। आद्यस्वरितात्पूर्वः, न्युब्जाच्च परः ऊर्ध्वगामी। शेषासु तिसृषु स्थितिषु वामगामी।

पृ० १२, श्लोक ४६ सुबोधिन्याम्—

अथ पञ्चधा अनुदात्तः। तदेषां पञ्चानां नामान्यस्माभिः हस्तप्रदर्शनमभिलक्ष्य एवं कृतानि—(१) अन्त्यदर्शी (अयं सप्रचयोऽनुदात्तः) (२) सामान्यानुदात्तः (निम्नगामी)। (३) दक्षगामी अनुदात्तः (४) अन्तर्गामी अनुदात्तः (५) तिर्यग्दर्शी अनुदात्तः। सोऽयं द्विप्रकारः (क) पूर्णन्युब्जपूर्वः—बृहत्युष्णिहा (सं० २३।३३ (ख) दक्षन्युब्जपूर्वः—न्नुदहार्य्यः स दृष्टो (सं० १६।७) इति।

पृ० १३ पं० १८ श्लो० ५३ सुबोधिन्यामन्ते—

स्वरितादिति = स्पष्टस्वरितात् मध्यावर्तिनश्चेत्युभयोः परः। गणपतिं हवामहे (सं० २३।१९)। च व्युप्तकेशाय (सं० १६।२९)। इति क्रमेणोदाहरणे।

पृ० १४ पं० २१ श्लो० ५८ सुबोधिन्याम्—

त इमे पंच स्वरिताः हस्तदर्शनस्थित्या इत्थं संज्ञापिताः—(१) मध्यपाती (२) मध्यदर्शी (३) मध्यावर्ती (४) पूर्णन्युब्जः (५) अर्द्धन्युब्जः, दक्षन्युब्जापरनामधेयः इति।

पृ० १५ पं० १६ श्लो० ६८ सुबोधिनी—

अभ्यसनीयमन्त्रग्रन्थे अर्थस्य अपेक्षामकृत्वा तन्निरपेक्षेण सन्ततविधया लेखनं, पदविभागमकृत्वा पठनं श्रवणं दृष्टिश्च दीयते

चेत् लेखन-पठन-श्रवण-दर्शनजनिताः संस्काराः द्रढिम्ने बुद्धि-वैशद्याय च श्रेयसे प्राचीनैरभिमताः। अत एव प्राचीनसन्तत-( रेखा-पदविभागविरहित ) शैलीलिखितग्रन्थपाठकाः स्वीयया अभ्यूहप्रधानया दृष्ट्या साधारणपाठकानतिशरेते।

६६ स एव = अभ्यस्यमन्त्रग्रन्थः।

पृ० १९ पं० ८— ९१ श्लोकानन्तरं; मूले

रङ्गे हस्तमुद्रा

रङ्गे सर्वत्र तर्जन्याः प्रसारः शास्त्रतो मतः।
केचिन्मध्यमया सार्धं क्षेपणं कुर्वतेऽमतम्॥ ९१क॥

अत्र सुबोधिनी—

९१ क— केचन द्विमात्रिके रङ्गे तर्जन्या सह मध्यमामपि प्रदर्शयन्ति, तत्प्रदर्शनं न सद्भिरनुमन्यते। एतच्च तर्जनीप्रसारणमन्याङ्गुलीनां न्यचने (नामने) एव सम्भवतीति सर्वत्र ध्येयम्। एवं विसर्गे कनिष्ठाप्रसारणेऽप्यन्याङ्गुलीनां नामनमवगन्तव्यम्। एतत्प्रसारणमेव बहुत्र शिक्षासु 'क्षेप' शब्देनाप्युच्यते।

पृ० २२ पं० ९ श्लो० १०५ अनन्तरं मूले—

यवौ दीर्घस्वरैर्युक्तौ स्वरितौ सविसर्गकौ।
स्यातां तदाङ्गुली क्षेप्ये इति गौडा वदन्ति नः॥
कनिष्ठिकैव क्षेप्येति दाक्षिणात्यास्तु मन्वते॥ १०५ क॥

सुबो० १०५ क—सदस्यैः (सं० ७।४५) अतिविश्वाः (सं० ११।८४)

पृ० २७ पं० १५ 'एतत्त्रितयं वेदः' इत्यस्य स्थाने सुबोधिन्याम्—

एतत् त्रितयं पृथक् पृथक् पूर्णो वेदो माध्यन्दिनीयेषु परिभाष्यते अध्ययनाय। अत एव 'शतषष्टः' षिकन् पथः इति कात्यायनीयं (पा० ४।२।६०) वार्तिकं ब्राह्मणबृहत्त्वात् शतपथिकः, षष्टिपथिकः, इति शुक्लयाजुषाणामध्येतॄणां संज्ञा-विशेषं व्यावहारिकतया समर्थयद् वेदान्तराध्यायिभिर्वैलक्षण्यं निर्दिशति।

महायाज्ञिक-विद्वत्तिलक-आचार्य-
श्रीगोपालचन्द्रमिश्रविरचिता
शुक्लयजुर्वेद—माध्यन्दिनशाखीया

# सम्प्रदायप्रबोधिनी शिक्षा

## [ १ ] अथ सामान्यप्रकरणम्

मङ्गलम्

बोधः प्रयोगः संसिद्धिः सम्प्रदायश्च सद्गुरुः ।
यस्मादिमे प्रवर्तन्ते शिक्षाशास्त्रं तदाश्रये ॥ १ ॥

---

अथ सम्प्रदायप्रबोधिन्याः शिक्षायाः टुप्टीकात्मिका

## व्याख्या सुबोधिनी

सुखबोधाय रचिता सम्प्रदायप्रबोधिनी ।
साप्यनभ्यस्तमन्त्राणां न सुखाय भवेत्ततः ॥ १ ॥
सुबोधिनी लिख्यतेऽसौ व्याख्या सुस्पष्टबोधिनी ।
उपकाराय कल्पेत वेदार्थपरिशीलिनाम् ॥ २ ॥

१—बोधः—लौकिकानां वैदिकानां चाक्षराणां लेखोच्चारणयोः, अदृश्यस्वरूपस्य ब्राह्मणत्व-पुंस्त्वादेश्च । प्रयोगः—व्याकरणसिद्धोऽपि लोपागमवर्णविकारप्रकृतिभावरूपः संस्कारः कस्यां शाखायां कीदृशः प्रयोक्तव्य इति निर्देशमूलकः । एवं यज्ञादिषु मन्त्रोच्चारणे मध्यमा वृत्तिरभ्यर्हितेत्यादिः प्रयोगानुगणो-

उपक्रमः, शिक्षाप्रयोजनम्

ऋग्यजुः सामाथर्वाणो वेदास्तत्र यजुर्द्विधा ।
कृष्णं शुक्लं, तत्र शुक्लं काण्वं माध्यन्दिनीयकम् ।
द्वयं वै पञ्चदशसु शाखासु प्राप्यतेऽधुना ॥ २ ॥
उत्तरे भारते प्रायः शुक्लं माध्यन्दिनीयकम् ।
कुलश्रुतौ तथाधीतौ कर्मकाण्डे समादृतम् ॥ ३ ॥
तथापि कलिकालोऽयं संस्काराभाव एव च ।
दुर्बोधत्वं प्रापयति सम्प्रदायागतं क्रमम् ॥ ४ ॥

---

पदेशः शिक्षाशास्त्रविषयः । संसिद्धिः—सम्यक् सिद्धिरिच्छायाः । शिक्षाशास्त्राननुकूलत्वे फलविरहस्य 'मन्त्रो हीनः' (पां०शि० ५२) इत्यादिषु बहुत्र स्मरणात् । सम्प्रदायः—तत्तच्छाखीयः तत्तद्देशीयश्च उच्चारणसम्प्रदायः शिक्षाशास्त्रेणैव सिद्ध्यति । सद्गुरुः—गुरोः साधुत्वमपि शिक्षाशास्त्रानुसारित्वे एव जना अभिप्रयन्ति ।

२—पञ्चदशशाखानां नामानि चरणव्यूहे (२ खं०) द्रष्टव्यानि ।

३—कान्यकुब्जेषु मैथिलेषु च सामवेदिनां, बङ्गीयेष ऋग्वेदि-तैत्तिरीय-सामवेदिनाम्, उत्कलेषु च काण्वशाखिनामप्युपलब्धेः 'प्रायः' इति । कुलश्रुतिः—कुलादागता श्रुतिः । 'अस्माकं शुक्लयजुर्वेदीया माध्यन्दिनीया शाखेति' कर्णाकर्णिकया पारम्परिकी श्रुतिः, तस्यां । अधीतौ-साम्प्रतिके परीक्षाद्यात्मके अध्ययने । कर्मकाण्डे-सामवेदित्वेन ऋग्वेदित्वेन वा ख्यापयतामपि पुरुषाणां माध्यन्दिनीयसूत्र-मन्त्राद्याश्रयणात् । एतच्च न विरुद्धम् 'सर्वशाखाप्रत्ययमेकं कर्म' (जै०२।४।२ अ०) इति न्यायादिति केचित् ।

४—उपनयनसंस्कारसत्वेऽपि मन्त्रोपदेष्टराचार्यस्य च शास्त्रो-

तस्मादियं मया शिक्षा सम्प्रदायप्रबोधिनी ।
श्रीश्रीगुरोर्भगवतः प्रसादाल्लिख्यते स्फुटा ॥ ५ ॥

वेदाध्ययने साधारणधर्माः

सुप्रसन्नमना भूत्वा विनीतः स्वासनं भजेत् ।
निवेश्य दृष्टिं हस्ताग्रे वेदं स्वीयं समभ्यसेत् ॥ ६ ॥

हस्तस्थापनम्

हस्तौ सुसंयतौ धार्यौ जानुनोरुपरि स्थितौ ।
गुरोरनुमतिं कुर्यात् पठन्नान्यमतिर्भवेत् ॥७॥*
आसनं स्वस्तिकं पद्मं बध्द्वोरौ दक्षिणे करम् ।
सव्यं समुष्टि विन्यस्य, मुष्टौ दक्षिणकूर्परम् ॥८॥*
तत्रोत्तानं हस्तदण्डं श्लथं श्लिष्टाङ्गुलं तथा ।
मनुष्यतीर्थोच्चं कृत्वा पितृतीर्थोदकं व्रजेत् ॥९॥*
नामितं करपृष्ठं तु सुव्यक्ताङ्गुलिमोक्षणम् ।
दक्षिणं स्वकरं कुर्यादुदात्तादिप्रबोधकम् ॥१०॥*

---

पदिष्टगुणविरहे वास्तविकावश्यकसंस्कारानुदयमूलकः संस्काराभावः । तथा चापस्तम्बधर्मसूत्रेऽपि १।१।११-१८;

६—तु०—या० शि० पृ० २१ । ७—द्र०—या० शि० पृ० १४

८—दक्षिणोरौ वामकरं मुष्टिबन्धं कृत्वा स्थापयेत् । तत्र च मुष्टौ दक्षिणहस्तस्य कूर्परम् = हस्तमानोपयोगिसीमास्थि, स्थापयेदिति भावः ।

९—द्र०—या० शि० पृ० ३६ । अङ्गुष्ठमूलदेशो मनुष्यतीर्थः । तर्जन्यङ्गुष्ठमध्यं पितृतीर्थः ।

वर्णोच्चारणे स्थितिः

कूर्मोऽङ्गानीव संहृत्य चेष्टां दृष्टिं दृढं मनः ।
स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद् बुधः ॥११॥

उच्चारणधर्माः

नाभ्याहन्यान्न निर्हन्यान्न गायेन्नैव कम्पयेत् ॥१२॥
उपांशु त्वरितं चैव नोच्चरेद् वित्रसन् यतः ।
अपरूपसहस्राणां सन्देहे स प्रवर्तते ॥१३॥

पाठदोषाः

शङ्कितं भीतमुद्घृष्ट-मव्यक्तमनुनासिकम् ।
काकस्वरं मूर्ध्निगतं तथा स्थानविवर्जितम् ॥१४॥
विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् ।
व्याकुलं तालहीनं च पाठदोषाश्चतुर्दश ॥१५॥

---

११—द्र०—या० शि० पृ० १६ ।

१२-१३—द्र०—या० शि० पृ० १६, १६२ ।

१४-१५—द्र०—या० शि० पृ० २३ । (१) शङ्कितम्—अयं वा स वा वर्ण इति संशयं मनसिकृत्य पठनम् । (२) भीतम्-भयेन पठनम् । (३) उद्घृष्टम्—रोषेण रोदनेन क्षोभेण वा समपेक्षित-बलादधिकबलेनोच्चारणम् । एतस्मिन्नुच्चारणे प्रसृतत्वम्, ध्वनेरूर्ध्वत्वं चानुभूयते । (४) अव्यक्तम्—स्पष्टतया नोच्चारितम् (५) अनुनासिकम्—अननुनासिकाक्षरस्यापि नासिकयोच्चारणम् (६) काकस्वरम्-कण्ठं निष्पीड्योच्चैरुच्चारणम । (७) मूर्ध्निगतम्—अत्युच्चैः पूर्णबलेनोच्चारितम् । (८) स्थानविवर्जितम्—शिक्षा-शास्त्रोपदिष्टस्थानविरहेणोच्चारणम् । (९) विस्वरम्—सहाध्येतॄणां

पाठकगुणाः

माधुर्यमक्षरव्यक्तिर्हस्तक्षेपश्च सुस्वरः ।
धैर्यं लयसमत्वं च षडेते पाठके गुणाः ॥१६॥

पाठकदोषाः

गीती शीघ्री शिरःकम्पी यथालिखितपाठकः ।
अल्पकण्ठोऽनवहितः षडेते पाठकाधमाः ॥१७॥

वेदाध्ययनक्रमः, तत्र संस्था (सन्था) स्वरूपम्

गुरूक्तं शृणुयान्मन्त्रं तूष्णीं पश्चादनूच्चरेत् ।
आवर्तनं जिघृक्षार्थं 'संस्था' त्रिः पञ्च सप्त वा ॥१८॥❀

---

समानस्वरतां परित्यज्योच्चारणम्, समपेक्षितमन्द्रादिस्वरविरहेण उदात्तादिस्वरप्रदर्शनाभावेन वा उच्चारणम्। (१०) विरसम्-रूक्षोच्चारणं माधुर्यविरहेण। (१०) विश्लिष्टम्—समपेक्षितैक-प्राणयोगेऽपि विश्लिष्योच्चारणम् (११) विषमाहतम्—चर्वण-क्रियाप्रदर्शनमुखेन वर्णानामुच्चारणम्। (१३) व्याकुलम्—शोक-भयादिनिमित्तेन, स्वभावतो वा धैर्यविरहेण चित्तविक्षेपा-नुमानज्ञापकवृत्योच्चारणम्। (१४) तालहीनम्—तालशब्दोऽत्र अवसानार्थः साधीयान्, ततश्च समपेक्षितावसानविरहितो-च्चारणम्।

१६, १७—तु०—या० शि० पृ० १३=, १३७।

१८—सम्प्रदाये अध्ययनशब्दार्थः—गुरुमुखोच्चारणानू-च्चारणम्। गुरूक्तस्य वर्णोपदेशस्य ग्रहणार्थं दृढतायै चाभ्यासो द्विधा क्रियते। तत्र प्रथमः संस्थारूपेण। स लोके 'सन्था' इति व्यवह्रियते। तत्र गुरूक्तस्य तत्सान्निध्ये एव समनन्तरं त्रिवारं पञ्चवारं सप्तवारं वा सप्ताहं पक्षं वा यावत् आवर्तनम्। द्वितीयो गुणनिकारूपेण।

गुणिनी (गुन्नी) स्वरूपम्

पक्षं वार्द्धमधीतोक्ति–गुरोस्तु निरपेक्षया ।
'गुणिनी' सा सप्तकादिशतान्तावृत्तिरन्वहम् ॥१९॥ॐ

अभ्यासे पूर्णमन्त्रस्य क्रियमाणेऽग्रतः स्थितः ।
पदद्वयात्मा प्रतीको धृत्यै चाभ्यस्यते सह ॥२०॥

चर्चा-स्वाध्याय-स्वरूपम्

आभ्यासमर्द्धमन्त्रस्य यथार्हं पक्षयोर्द्वयोः ।
कथनं प्रोच्यते 'चर्चा', 'स्वाध्यायः' प्रत्यहं जपः ॥२१॥

---

१९—गुणनिकैव 'गुन्नी' इति भाष्यते । तत्र गुरुसान्निध्यं नावश्यकम् । सतीर्थ्याः सम्भूय गुरुणोपदिष्टस्य मन्त्रजातस्य प्रत्यहं सप्तादि—शतान्तया गुरुनियमितसंख्यया सप्ताहं पक्षं वा आवर्तनं कुर्वन्ति ।

२०—गुणनिकायां पूर्णः एकैको मन्त्रः दण्डकलितवदावर्त्यते । तत्राग्रिममन्त्रस्य पदद्वयात्मा प्रतीकोऽपि सहाभ्यस्यते । एतेन पाठक्रमविस्मृतिर्न भवतीति दृष्टं फलम् । यथा—इषेत्वा…पाहि । वसोः पवित्रम् । ( सं० १।१ )

२१—चर्चा—यत्र मन्त्राध्येतारः स्वेषु विभागद्वयं कृत्वा परस्परमभिमुखास्तिष्ठन्ति । तत्र च यथाक्रममेकैकः पक्षः संहितायां क्रमादिषु च एकैकमवसानं, पदचर्चायां तु एकैकं पदं यथापाठं प्रापयति । 'स्वाध्याय'शब्दस्य स्वपूर्वपुरुषपरिगृहीतवेदोऽप्यर्थः । इह त्वयं स्मार्तोऽर्थः ।

## पट्टिका ( पट्टी ) पट्ट ( फड ) स्वरूपम्

संस्था गुणनिका चर्चा सतीर्थ्यैः सह सम्भवेत् ।
'पट्टिका' सा स्मृता,चान्यैः-'पट्टं' स्वाध्याय-चर्चयोः ॥२२॥

### स्वाध्यायारम्भविधिः

गणनाथ-सरस्वती-रवि-शुक्र-बृहस्पतीन् ।
पञ्चैतान् संस्मरन्नित्यं वेदवाणीं प्रवर्तयेत् ।२३॥
प्रणवं प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ।
सावित्रीं चानुपूर्व्येण ततो वेदं समारभेत् ॥२४॥
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते ॥२५॥

---

२२—सतीर्थ्याः = समानगुरवश्छात्राः संस्थायां गुणनिकायां च यदा सम्भूय परस्परमभिमुखास्तिष्ठन्ति सा तेषां स्थितिः पट्टिका = 'पट्टी' इति भाषायामुच्यते । यदा च भिन्नगुरवश्छात्राः स्वाध्यायं चर्चां वा कर्तुं स्थिता भवन्ति सा स्थितिः 'पट्टम्' = 'फड' इति भाषायां कथ्यते ।

२३—द्र०—मुद्रितपत्राङ्कितमूलमात्रसंहितायाः प्रारम्भे ।

२४—द्र० —या० शि० पृ० १७ । शाखान्तरे वेदाध्ययनारम्भे चतुर्मात्रस्त्रिमात्रो वा प्रणवः क्रियते । माध्यन्दिनीयैस्तु कैश्चिदेव त्रिमात्रः प्रयुज्यते । बहुभिस्तु स्वरूपस्थितो द्विमात्र एव । अत्र च तैः 'अष्टमं नैव विद्यते' इति प्रणवसम्बन्धियाज्ञवल्क्यशिक्षा-वचनमुपस्थाप्यते ।

२५—द्र०—मनुस्मृतिः २।७४ ।

संक्षेपतोऽथवा पूर्वं 'हरिः ओम्' इति कथ्यते ।
अधीतेरवसानेऽप्योम् प्रतीकश्चाग्रमन्त्रतः ॥२६॥

हरिः ॐ स्वरविचारः ❀

वेदारम्भे हरिः शब्दः पदवत् पठ्यते यदि ।
आद्युदात्तः प्रयुज्येत स्वरितान्त इति स्फुटम् ॥२७॥
कथने संहितावत् स्यादनुदात्तो रिवर्णकः ।
प्रणवस्तु प्लुतो ज्ञेय उदात्तः सर्वदा बुधैः ॥२८॥
सर्वारम्भे हरिः ओम् स्यात् कर्मकाण्डे समर्चने ।
केवलं प्रणवो योज्यो होमे प्रत्याहुति स्फुटम् ॥२९॥

स्वराणां हस्तेन ज्ञापनम्

माध्यन्दिनीयशाखायामस्ति हस्तेन बोधनम् ।
उदात्तादिस्वराणां यज् ज्ञातव्यं तदधीतिभिः ॥३०॥

---

२६—गणपत्यादिनमस्कारपूर्वकं सावित्रीप्रयोगान्तं वेदाध्ययनमङ्गलम् । अथवा-एतत् स्थाने संक्षेपतो मङ्गलस्य प्रयोगः केवलं 'हरिः ॐ' इत्येव उक्त्वा प्रारम्भः । वेदाध्ययनं यदा समाप्यते तदा 'ॐ' इत्युक्त्वा अग्रिममन्त्रस्य प्रतीकउच्यते सम्प्रदाये ।

२७—हरि' ÷ । ॐ३म् । अथवा—हरि' ÷ । ॐ ।

२८—हरिः शब्दस्य ॐ पदेनैकप्राणयोगेन कथने स्वरः हरि ॐम् । प्रणवः सर्वत्र सर्वदा उदात्त एव । अध्ययनावसाने प्रणवः उदात्तः प्लुतश्च ।

२९—यद्यपि संहितापाठक्रमेण स्मार्तकर्मकाण्डे प्रयोगो नास्ति, तथापि तत्र सर्वारम्भे हरिः ॐ इति प्रयुज्यते । होममन्त्रेषु तु प्रत्याहुति ॐ इत्येव मन्त्रादौ प्रयोग', इति प्रासङ्गिकमुक्तम् ।

हस्तेन स्वरप्रदर्शने साधारणनियमः

सममुच्चारयेद् वर्णान् हस्तेन च मुखेन च ।
स्वरश्चैव तु हस्तश्च द्वावेतौ युगपत्स्थितौ ॥३१॥

हस्तस्वरमहिमा

यत्र यत्र स्थिता वाणी पाणिस्तत्रैव तिष्ठति ।
हस्तभ्रष्टः स्वरभ्रष्टो न वेदफलमश्नुते ॥३२॥
हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् ।
कामनाहानिसन्तप्तो वियोनिमधिगच्छति ॥३३॥

हस्तदोषाः

चुलुर्नौका स्फुटो दण्डो स्वस्तिको मुष्टिकाकृतिः ।
परशुर्हस्तदोषाः स्युस्तथाङ्गुल्या प्रदर्शनम् ॥३४॥❀

हस्तेन प्रदर्शनस्थानानि

उदात्तमूर्ध्वं हस्तेन स्वरितं मध्यतस्तथा ।
प्रचयं स्वरितस्थानेऽनुदात्तं दर्शयेदधः ॥३५॥❀
द्रुतवृत्तौ दृढेऽभ्यासे प्राप्ते वयसि वैदिकाः ।
यथाशास्त्रं दर्शयन्ति हस्तं प्रादेशगामिनम् ॥३६॥
उदात्तं तु भ्रुवः प्रान्ते स्वरितं नासिकाग्रतः ।
हृत्प्रदेशेऽनुदात्तं तु तिर्यग् जात्यादिकान् स्वरान् ॥३७॥

---

३१—द्र०—या० शि० पृ० २१ । स्वरः—मुखेनोच्चारणीयः उदात्तादिः ।

३२—वाणी—मन्त्राक्षरसम्बन्धिनी, पाणिः-तदक्षरसम्बन्धो उदात्तादिबोधको हस्तः । द्र०—या० शि० पृ० ३३, २१ ।

३३-३४-तु०—या० शि० पृ० ९०, ३२ । चुलुराचमनमुद्रा । स्वस्तिकोऽभयमुद्रा ।

हस्तचालनसीमा

स्वस्थोच्चारेऽभ्यासकाले प्रयोगे मन्त्रजागरे ।
हस्तो वसन्तपूजायां न प्रादेशे प्रवर्तते ॥३८॥

❀ इति सामान्यप्रकरणम् ❀

[ २ ] अथ स्वरप्रकरणम्

उदात्तादिस्वराङ्कनप्रकारः

उदात्तस्य प्रचयस्य च ज्ञापनम्

उदात्तोऽचिन्ह एवं च प्रचयोऽपि भवेत्तथा ।
परं स्वरितपूर्वस्तु प्रचयः सर्वथा भवेत् ॥३९॥
आद्यानुदात्तात् स्वरितात् पूर्वो, न्युब्जात्परस्तथा ।
अवसानेऽनुदात्ताच्च परोऽचिन्ह उदात्तकः ॥४०॥

---

३७-- तु०—या० शि० पृ० ३८ ।

३८—प्रयोगे = स्मार्तकर्मकाण्डीये । मन्त्रजागरे=मन्त्राणां विस्मृतिर्माभूदिति मनसिकृत्य क्रियमाणे परस्परस्पर्धायुक्ते पाठे । वसन्तपूजा=वाराणसेया हिं वैदिकाः यजमानेन प्रार्थिताः पूजिताश्च पक्षद्वये स्थित्वा सस्पर्द्धं सोत्साहं च यं वैदिकं पाठमधीयते सा वसन्तपूजा ।

३९—एवमिति अचिह्नः ।

४०—(१) आद्यानुदात्तात् पूर्वो यथा—अम्बे अम्बिके (सं० २३।१८)

(२) स्वरितात् पूर्वो यथा—आहम'जानि (सं० २३।१९)

(३) न्युब्जाद् यथा – बृहत्युष्णिहा' ( सं० २३।३३ )

स्वरितलेखनम्

स्वरितस्य भवेद्रेखा वर्णस्योपरि लम्बिता ।
स्पष्टं स्वरित एषोऽन्यः स्वतन्त्रः स्वरितो भवेत् ॥४१॥*
जात्यादिस्तत्र चिन्हं तु वर्णाधस्तिर्यगङ्कनम् ।
भुजैकहीनस्त्र्यस्रस्तु मध्यावर्तोऽथ न्युब्जके ॥४२॥*
उत्तानशायितः षष्ठो ह्यङ्कः प्राचां मतोऽस्ति वै ।*

अनुदात्तलेखनम्

नीचै रेखानुदात्तस्य वर्णाधो लिख्यते ऋजु ॥४३॥*

त्रैस्वर्यव्यवस्था

माध्यन्दिनीयशाखायां संहितायां त्रयः स्वराः ।
उदात्तनीचस्वरिताः प्रचयो नैव गण्यते ॥४४॥

उदात्ते हस्तप्रदर्शनं भेदाश्च*

अनुदात्तपरो ह्येकोऽन्यः पूर्वः स्वरितस्य च ।
उदात्तो द्विविधो ह्येवं हस्तनिर्देशने भवेत् ॥
पूर्वो वामे प्रदर्श्यस्तु ऊर्ध्वं चैव द्वितीयकः ॥४५॥

---

(४) अवसाने अनुदात्तात् परो यथा—गर्भधम् (सं० २३।१६) एवं चतुर्धा उदात्तपरिचयः ।

४२—स्वतन्त्रः स्वरितः जात्यादिः = जात्याभिनिहितक्षैप्रप्रश्लिष्टाः ।

४५—अनुदात्तात् पर उदात्तो द्विधा भवितुमर्हति-द्वयोरनुदात्तयोर्मध्यगत एकः, अवसाने अदृष्टस्वरितश्च द्वितीयः, तयोर्यथाक्रममुदाहरणं यथा—अम्बे अम्बिकेम्बा॑लिके (सं० २३।१८) गर्भधम् (सं० २३।१६) अनयोराद्यानुदात्तात्पूर्वस्य च वामे प्रदर्शनमुदात्तस्य । एवं चतुर्धा परिभाषित उदात्तो हस्तप्रदर्शने द्विधा ।

अनुदात्तो हस्तप्रदर्शनं भेदाश्च*

(१) अनुदात्ता यदैकत्र ह्यनेके लक्ष्मतो यदि ।
तत्रान्त्ये तु करं नीचै-र्मध्ये पूर्वेषु दर्शयेत् ॥४६॥
(२) उदात्तव्यवधानेन स्वरितो लक्ष्मतो भवेत् ।
पूर्वेऽनुदात्तचिन्हे तु नीचैर्हस्तं प्रदर्शयेत् ॥४७॥
(३) यद्युदात्तव्यवायेना – नुदात्ताङ्कः पुनर्भवेत् ।
तदा दक्षिणपार्श्वेऽग्र्यमनुदात्तं प्रदर्शयेत् ॥४८॥
(४) यद्यव्यवहितं लक्ष्म मध्यावर्तात्पुरो भवेत् ।
तत्र भ्रमिः प्रदर्श्यस्तु नीचैश्चिन्हे यथागुड ॥४९॥
(५) न्युब्जचिन्हेऽव्यवहितेऽनुदात्ते पिण्डदानवत् ।
करः, एवं पंचधा स्यादनुदात्तप्रर्शनम् ॥५०॥

हस्तप्रदर्शनतः स्वरितभेदाः*

स्वरितः पञ्चधा ज्ञेयो हस्तनिर्देशने बुधैः ।
स्पष्टस्वरित एकस्तु प्रचयश्च द्वितीयकः ॥५१॥
मध्यावर्तस्तृतीयस्तु दक्षन्युब्जश्चतुर्थकः ।
नीचन्युब्जः पंचमश्च नान्यथा दर्शनं क्वचित् ॥५२॥

---

४६—(१) यथा —गायत्री त्रिष्टुप् ( सं० २३।३३ ) ।
४७—(२) गण' ना'न्त्वा (सं २३।१६) ।
४८—(३) जग'त्यनुष्टुप्पङ्क्त्या सह ( सं० २३।३३)
४९—(४) कपर्दिने' च व्युप्तकेशाय च नम': (सं० १६।२९)
उदरे गुड गुडायिते यथावर्तनमनुभूयते तद्वद्धस्तभ्रमिः ।
५०—(५) बृहत्युष्णिहा' ( २३।३३ )

स्वरितेषु हस्तप्रदर्शनम्*

(१) ऊर्ध्वस्थानात् पात्यते तु स्पष्टस्वरितचिह्नितः ।
(२) स्वरितात्परतोऽचिह्नो वर्णः प्रचयसंज्ञकः ॥५३॥
मध्ये प्रदर्शनं तस्य स्वरितस्थानतो भवेत् ।
(३) स्वरितानुदात्तचिह्नं यत्संश्लिष्टं दृश्यतेऽथवा ॥५४॥
मुद्रणे च चतुर्थाङ्को मध्यावर्तः प्रकीर्तितः ।
अत्र पूर्वेऽनुदात्ताङ्के वर्णे मध्ये भवेद् भ्रमिः ॥५५॥
मध्यावर्ते भ्रमेर्वाह्यं प्रापयेत् स्वरिते करम् ।
(४) उत्तानशायिते षष्ठे चाङ्के न्युब्जं विदुर्बुधाः ॥५६॥
तत्र पूर्वेऽनुदात्ताङ्के पितृपिण्डप्रदानवत् ।
हस्तः प्रदर्शनीयस्तु न्युब्जे तु न्युब्जता भवेत् ॥५७॥
न्युब्जाङ्कतोऽनुदात्ताङ्के दृश्ये दक्षे प्रदर्शनम् ।
(५) स्वरिताङ्को दृश्यते चेत् तदा नीचैः प्रदर्शनम् ।
उभयत्राप्युदात्तः स्वं स्थानं मध्यगतो लभेत् ॥५८॥

---

५३—(१) गणाना'न्त्वा (२३।१६) अत्र 'ना' स्वरितचिह्नवत्वात्स्पष्ट स्वरितः (२) गणप'तिं हवामहे (सं २३।१६) अत्र 'तिं हवामहे' प्रचयाः। स्वरितस्थाने मध्ये प्रदर्शनात् स्वरिता इत्यौपचारिको व्यपदेशः। वाजसनेयिनां प्रचयस्य पृथक् स्वरत्वं नास्ति।

५४—(३) च व्युप्तकेशाय (सं० १६।२६) ५५—अङ्कः = अङ्कनम, स्वरसङ्केतबोधकं चिह्नम्।

५६ ५७—(४) रथ्यो न रश्मीन् (स० २४।४६)। दक्षे न्युब्जतायाः प्रदर्शनम्।

५८—(५) बृहत्युष्णिहा' (सं० २३।३३)।

कण्ठतः स्वरबोधनम्, सम्प्रदायमहिमा च

एवं स्वरास्तु हस्तेन दर्शनीया अथापि च ॥५९॥
कण्ठेनोच्चारणं तेषां गुरुभ्योऽभ्यासतस्तथा ।
सतीर्थ्येभ्यः श्रद्धया च ब्रह्मण्यैः समवाप्यते ॥६०॥
विरहे सम्प्रदायस्य श्लथेऽभ्यासेऽस्मृतौ तथा ।
उच्चारणं भिद्यते तद् वेदह्रासकरं परम् ।
तस्मात्सर्वात्मना वेदो सद्गुरोः समधीयताम् ॥६१॥

❀ इति स्वरप्रकरणम् ❀

[ ३ ] अथ वर्णोच्चारणप्रकरणम्

शिक्षाशास्त्रोपयोगः, सम्प्रदायतो ज्ञानम्

शिक्षाशास्त्रे पूर्णतया वर्णस्थानादिबोधनम् ।
उक्तं तथोपदेशस्तु बाल्ये प्रायो न लभ्यते ॥६२॥
शिक्षाशास्त्रं ततः प्रौढा विवेकायोपयुञ्जते ।
यदा तु वेदगुरुभिः पाठ्यते बालकस्तदा ॥६३॥
उच्चारणे स्याद् वर्णानां शिक्षाशास्त्रानुकूलता ।

एतच्छिक्षाविषयः

वर्णानां देवनागर्य्यां लेखो वै लोकवेदयोः ॥६४॥
समः, क्वचन वेदेऽस्ति विशेषो लेखलक्ष्मतः ।*
उच्चारणं लौकिकं च क्वचिद् वेदेऽन्यथायते ॥६५॥

---

५८—मध्यगतः—न्युब्जानुदात्तचिन्हमध्यगतः, न्युब्जस्वरितचिन्हमध्यगतो वा ।

६५—लक्ष्म-चिन्हम्, सङ्केतः । यथा यकारस्य ।

संहितया लेखने मुद्रणे च स्वरूपम्

तदत्र बोध्यते स्पष्टं माध्यन्दिनमतानुगम् ।
मुद्रणादौ स्पष्टमर्थबोधनाय यथायथम् ॥६६॥
रेखा-पदविभागादि लक्ष्म यद्दीयते बुधैः ।
सम्प्रदायागताभ्यासोच्चारणाय न तन्मतम् ।६७॥
अभ्यस्यमन्त्रग्रन्थेऽर्थनिरपेक्षेण लेखनम् ।
पठनं श्रवणं दृष्टिर्द्रढिम्ने श्रेयसे मताः ॥६८॥
स एव यद्यर्थबोध-कृते मुद्राप्यते बुधैः ।
तत्र सर्वः समादृत्यो विधिर्लोकमतानुगः ॥६९॥

पूर्वरूपचिह्नं विवृत्तिः

अकारः पूर्वरूपेण लुप्यते यत्र तत्स्थले ।
अर्द्धाकारं सर्परूपं लौकिका विलिखन्ति तत् ।
वेदे नैव प्रयोक्तव्यं विवृत्तेर्लक्ष्म तत्स्मृतम् ॥७०॥
द्वयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न दृश्यते ।
विवृत्तिस्तत्र विज्ञेया 'यऽईशे' तु निदर्शनम् ॥७१॥

विरामस्थानानि

मन्त्रमध्येऽवसाने तु विवृत्तावपि मात्रया ।
अवग्रहे प्रतीकेषु विरामः सर्वदा मतः ॥७२॥

---

६७—न तन्मतम्=साम्प्रदायिकलेखने तन्नाद्रियत इत्यर्थः ।
७१—द्र०-या०,शि० पृ० ८३ । यऽईशे ( सं० २३।२ )
७२—मन्त्रमध्ये इति त्रिचतुरादिविरामवत्सु मन्त्रेषु सर्वत्र

पदपाठे प्रतिपदं क्रमादौ नियते स्थले ।
मात्राकालोऽस्ति चर्चायां नापेक्ष्यो सोऽन्यपक्षिणा ॥७३॥

मात्राकालः

उच्चारणगतिं प्रेक्ष्य मात्राकालस्तु बोध्यते ।
गुरुभिः केवलं नास्ति लक्षणेन प्रयोजनम् ॥७४॥

ऋकारस्य रेकारोच्चारणम्

स्वरः स्वयमृकारोऽसौ रेकारोच्चारणं भजेत् ।

अनुस्वारलेखनं भेदाः हस्तमुद्राश्च*

अनुस्वारो यत्र दृश्यो धनुश्चिन्हे सुबिन्दुधृक् ॥७५॥
लघुः स मात्रिको हस्ते तर्जन्यङ्गुष्ठयोगदः ।
संयोगे परतो ह्येष गुरुत्वं शास्त्रतो भजेत् ॥७६॥
षष्ठाङ्को रेफयुक् ठो वा पार्श्वे वोर्द्ध्वं तु बिन्दुमान् ।
अनुस्वारं द्विमात्रं तु बोधयेद्दीर्घसंज्ञकम् ॥७७॥

---

विरामस्थानज्ञापनार्थः, न तु यत्र कुत्रचित् स्वाभिलषित-विरामे मात्राकालनिर्देशकः। अवग्रहः-पदपाठे भवति ।

७३—चर्चा-पक्षद्वयसाध्या, तत्र परस्परमन्यःपक्षः द्वितीय-पक्षीयं विरामकालं नापेक्षते, अपि तु द्वितीयपक्षस्य उच्चारणीयवर्णराशौ यदा वर्णद्वयं शिष्यते तदैवान्यः पक्षः स्वोच्चारणीयं पाठांशं प्रारभते इति भावः ।

७५—सर्वहुतऽऋचः ( सं० ३१।७) छन्दांसि जज्ञिरे (३१।७)
७७—गणपतिं हवामहे ( २३।१६) लेखो द्विधा—६०—ठं०

तर्जनीप्रसृतिस्तत्र हस्तेनैवं प्रदर्शनम् ।
अनुस्वारः स्वराभावान्न मात्राकालभाक् परम् ॥७८॥

अनुस्वारोच्चारणम्

भिन्नश्रुतिः शषसहरेफेषु तत्र मात्रिता ।
पूर्वश्लिष्टो गः प्रणव-द्वितीयमात्रया युतः ॥७९॥
सनादो गुँ श्रुतिर्बिन्दुः न ग्वं गोमादि वा भवेत् ।
यत्र स्वरूपतो बिन्दुः कथनं तत्र लोकवत् ॥८०॥

विसर्गस्य लेखनं हस्तमुद्राश्च ॐ

वेदे विसर्गश्चिन्हेन सहितो लिख्यते ह्यतः ।
रेखा बिन्दुद्वयस्यान्त-रधोरेफसमा च या ॥८१॥
कनिष्ठां क्षेपये, दूर्ध्व-रेफतुल्या तु तर्जनीम् ।
तिर्यग्रेखा द्व्यङ्गुली ते क्षेप्ये इति विनिर्दिशेत् ॥८२॥

---

७८—यद्यपि लोके अनुस्वारस्य एकमात्रिकता द्विमात्रिकता वा नास्ति, परमूष्मसु परेषु वेदेऽनुस्वारस्य भिन्ना श्रुतिः मात्राकालसंबन्धश्च भवति शास्त्रोपदेशादेव। [ शु० प्रा० ४।१४८, १४६ ]

७६—ऊष्मणां पूर्वस्यानुस्वारस्य उच्चारणनिर्देशः-पूर्वश्लिष्ट इति। पूर्वश्लिष्टत्वात् गस्य द्वित्वश्रुतिः। स्पष्टं तु साम्प्रदायिकोच्चारणात एव ज्ञायेत।

८०—बिन्दुरनुस्वारः।

८१—पुरुषः। सहस्राक्षः ( सं० ३१।१ )

८२—सूचीभि÷( सं० २३।३३ ) ते-तर्जनीकनिष्ठिके।

२

## विसर्गोच्चारणम्

'ह्' श्रुत्या मात्रया वेदे संहितायां प्रयुज्यते ।
स्वराश्रयी विसर्गोऽयम्, ऐ–औभ्यां परतो यदि ॥८३॥
इ-उ-स्वरश्रुतिं धत्ते, ऋकाराद् हे श्रुतिं तथा ।
परो ह्य-इ-उ-ए-ओ-भ्यो यथावर्णश्रुतिर्मतः ॥८४॥

### अवसानगतवर्णोच्चारणं हस्तमुद्राश्च ❀

अस्वरं व्यञ्जनं लोकेऽवसानेस्त्यर्द्धमात्रिकम् ।
साम्प्रदायिकद्भिःश्रुत्या कालतः करमुद्रया ॥८५॥
वेदे विशेषतां धत्ते तद् वेद्यं पाठशुद्धये ।
तर्जनीं नामयित्वा तु क-ट-ङ-णाँश्च दर्शयेत् ॥८६॥
तर्जन्यङ्गुष्ठयोगेन कुण्डलाकृतिना तु तम् ।
पं पञ्चाङ्गुलियोगेन, मुष्टिना मं प्रदर्शयेत् ॥८७॥

---

८३—ऐ-सदस्यैः (सं० ७।४५) औ–शीर्ष्णो द्यौः (सं० ३१।१३)

८४—ऋ—नॄः पाहि (सं०१३।५२) अ–आ–ऋषयः, सप्तदैव्याः (सं० ३४। ४६) इ–सूचीभिः (सं० २३।३३) ई–शठं० रात्रीः (सं० ३६।११) उ–मनो यजुः (सं० ३६।१) ऊ–केतपूः (सं० ६।१) ए—वरुणस्याग्नेः (सं० ७।४२) ओ—सुविताय शंयोः (सं० ३६।११)

८६—अत्र अवसानवर्णोच्चारणे पदपाठोदाहरणान्यपि द्रष्टव्यानि । क्— भिषक् (सं० १२।८०) ट— सम्राट् (सं० २०।५) ङ—प्राङ् (सं २५।२५) ण्—वृषण्वसू इति वृषण् । वसू (सं० ११।१३)

८७—त्—पुरीतत् (सं० ३१।६) प्—ककुप् (सं० २३।३३) म्—गर्भधम् (सं० २३।१६)

अङ्गुष्ठोपरि तर्जन्या नखं धृत्वा नकारकम् ॥८८॥

रङ्गस्य लेखनमुच्चारणं च *

पदान्तीयो नकारस्तु संहितास्वनुनासिकः ।
यदा स्यान् 'मैरयँश्चन्द्र' लोकतुल्यो रवः श्रुतौ ॥८९॥
स एव रेफपरको रङ्गः स्यान्मात्रिकः पुनः ।
स्वरमध्ये द्विमात्रः स्याद् रेखामात्राङ्कनायुतः ॥९०॥
नस्त उच्चार्यते रङ्गः कांस्येन समनिस्वनः ।
स्वरं दीर्घं रञ्जयित्वा मृदुर्ङश्रुतिवर्जितः ॥९१॥

यकारस्य जकारोच्चारणम्

रेखया यदि भिद्येत यकारस्योदरं तदा । *
चवर्गीय-जकारेण सममुच्चारणं मतम् ॥९२॥
सान्ध्यः पदान्त्यो वर्णैर्युग् उपसर्गपरस्तथा ।
अथ मा-स-न-शब्देभ्यो यकारो लोकवत्स्मृतः ॥९३॥

---

८८—न्—रश्मीन् (सं० ३४।४६)

८९—क्रमजटादिसन्धीरनुलक्ष्य संहितास्विति बहुवचनम् । मैरयँश्चन्द्रमसि ( सं० १।२८ )

९०—शत्रूँ १॥ रप ( सं० ७।३७ ) लोकाँ २॥ अकल्पयन् (सं० ३१।१३)

९१—तु०-या० शि० ( पृ० १३१ ) ।

९२—मनो यजुः ( सं० ३६।१ ) यकारस्य नीचैर्बिन्दुदानं त्वसाम्प्रदायिकम् ।

९३—सन्धिजः-अत्यतिष्ठद् ( सं० ३१।१ ) पदान्तीयः-मयि प्राणापानौ ( सं० ३६।१ ) वर्णयुक् पदादिरपि-यो रेवान् यो

मा यज्ञ-मथो ये-स यन्ता चैव मनो न ये ।
उपसर्गाच्च पादादि-ऋ-ह-सं-रेफयुक्तु जः ॥९४॥

र-लयोः सैकारोच्चारणम्

रेफो लकारश्च यदा श-ष-हेभ्यस्तु पूर्वतः ।
'ए' स्वरश्रुतिमान् ज्ञेयो स्वरभक्तिरियं मता ॥९५॥
ऋकारात्पूर्वतो रेफो गौड़ाचार्यैः स्वरश्रुतिः ।
दाक्षिणात्यैर्यथालोकं कथ्यतेऽनुपरम्परम् ।
लकारः श-हयोर्योगे सैकारश्रुतिभाङ् मतः ॥९६॥

वकारे विशेषलेखनमुच्चारणं च

वकारास्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूतरः ।

---

(सं० ३।२६) उपसर्गात् परः पदादिरपि-वियत्सूर्यो (सं० १२।३४) अथ-अप्यर्थोऽयम्, मा-माया स्वधया (सं० ११।६६) स-स योजते (सं० १५।३३) न-न यत्परो (सं० २०।८२)।

९४—मा यज्ञम् (सं० ५।३) अथो ये (सं० १६।८) सयन्ता (सं० ६।२६) मनो न येषु (सं० ७।१७) उपसर्गात्परोऽपि पादादिः-उप यज्ञम् (सं० ८।३५) ऋयुक्-सदोस्यृतस्य (सं० ५। ३) हयुक्-गेह्याय (सं० १६।४४) संयुक्-संय्यौमीदमग्ने: (सं० १।२२) रेफयुक्—उदहार्य्यः (सं० १६।७) अत्र यकारस्य जकारोच्चारणम्।

९५—श-दर्शतम् (सं० ११।३७) ष-सहस्रशीर्षा (सं० ३१।१) ह-देवं बर्हिः (सं० २१।४८)

९६—ऋ-अग्निर्ऋषिः (सं० २६।६) रे रे षिः इति गौड-सम्प्रदाये उच्चारणम्। श—शतवल्शा (सं० १२।१००) ह—उपवल्हामसि (सं० २३।५१)

पदस्यादौ गुरुर्मध्ये लघुः पंचमयुक् तथा ॥९७॥
सन्धिजश्च पदान्तीयो वर्णयुक्च लघूतरः ।
गुरौ द्वित्वं लेखने चोच्चारणं स्पष्टमेव हि ॥९८॥
लघौ लघूतरे लेखे न भेदोऽस्ति परं स्वतः ।
उच्चारणे मृदुर्भेदो ज्ञायते ह्यप्रमादतः ॥९९॥
सं विहायोपसर्गात्तु पदादिरपि वो लघुः ।
वो वां वा वै मन्त्रपाठे लघवो, गुरवः पदे ॥१००॥

वर्णान्तरस्य द्वित्वमुच्चारणं च

अथ सर्वेऽपि वर्णा ये शिक्षा–पार्षदशास्त्रतः ।
द्विर्भवन्ति यथालोक-मुच्चार्यास्ते यथायथम् ॥१०१॥

षकारस्य खकारोच्चारणम्

कवर्गीयद्वितीयेन खकारेण समो रवः ।

---

९७—गुरुः–ञ्वसो मम ( सं० २३।१६ ) लघुः–हवामहे (सं० २३।१६) अन्वालेभिरे (सं० ३४।४६) पञ्चमाः वर्गाणाम् ।

९८—सन्धिजः–वायो + इह = ञ्वायविह ( सं० २७।३२ ) पदान्तीयः—अमृतन्दिवि ( सं० ३१।३ ) वर्णयुक्–गणानान्त्वा ( सं० २३।१६)

१००—सम्–संञ्वपामि ( सं० १।२१ ). अन्योपसर्गात्परो लघुः– प्र वायुमच्छा ( सं०३३।५५ ) वः–देवो वः ( सं०१।१ ) वाम्—या वाङ्कशा ( सं० ७।११ ) वा–वातो वा मनो वा ( सं० ८।७ ) वै–न वा उ ( सं० २३।१६ )

१०१—प्रसङ्गचिन्तेयम् । सविता प्प्रार्पयतु (सं०१।१) आदौ ।

१०२—रवः = उच्चारणम् । इषे त्वा ( सं० १।१ ) टयुतिः—

मूर्द्धन्यस्य षकारस्य टवर्गीययुतिं विना ॥१०२॥

ज्ञवर्णोच्चारणम्

ज ञोर्ज्ञ इति वर्णस्य प्रयोगो भिद्यते श्रुतौ ।
गौड़ाचार्या जञौ स्पष्टं विश्लिष्य ब्रुवते परम् ॥१०३॥
महाराष्ट्रा दन्तमूल-पीडनाद् ग्न्यमिवाक्षरम् ।
ग्य-द्न्येत्यादिश्रुतिर्वेदसम्प्रदाये न विद्यते ॥१०४॥

गौडदाक्षिणात्योच्चारणविशेषाः

व्यृध्यै ङकयोर्योगे तसोर्योगे च भिद्यते ।
गौडानां दाक्षिणात्यानां कथनं गुर्वनुक्रमात् ॥१०५॥

यमबोधः

पञ्चमापञ्चमस्पर्शयोगे ज्ञेयो यमोऽक्षरम् ।
विदुषामपि मोहाय तत्र स्थूला दृशिस्त्वियम् ॥१०६॥

---

अष्टौ च (सं० १५।२५) ठ—ज्येष्ठाय च (सं० १६।३२) ड—× ढ—× । ण—विष्णुर्विचक्रमे (सं० ५।१) टवर्गयोगे न खकारोच्चारणम् ।

१०३—यज्ञेन यज्ञम् (सं० ३१।१६)

१०५—व्यृद्ध्यै (सं० ३०।१७) प्राङ्क्सोमो (सं० १६।२) त्रीन्त्समुद्रान्त्समसृपत् (सं० १३।३१)

१०६—यमस्वरूपं सिद्धान्तकौमुद्यामपि-'वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः ।' (पा० ८।२।१) शुक्लयजुःप्रातिशाख्येऽपि—'अन्तः पदेऽपञ्चमः पञ्चमेषु विच्छेदम् (४।१६१) 'अप्रत्यक्षकादिवर्णाशरीराः श्रुतिविशेषा एव यमाः, विसर्गानुस्वारादिवत्' इति शिक्षाविदः । दृश्यते तु कादिवर्णत्वं यमानाम् । अतो यमविषये बहुधा

संहितायां ककारस्तु मध्यतो यस्तमोस्तनोः।
लिख्यते न प्रयुज्येतान्यत्र विद्वत्समाश्रयः ॥१०७॥

दीर्घपाठस्थितिः

प्रतिज्ञापरिशिष्टे यद्दीर्घत्वं प्रतिपादितम्।
तदनुस्मृत्य सर्वत्र मात्राकालस्य दीर्घता।
तस्मान्माध्यन्दिनीयोऽसौ दीर्घपाठो निगद्यते ॥१०८॥

---

वचनोपलम्भाद्विदुषामपि मोहः प्रायः सम्भवति। अतोऽत्र यमविषये बहुविवेक्तव्यमन्यत्र विवेचयिष्यते। इह तु स्थूलदृष्ट्या वैदिकैरिदमवगन्तव्यं यत्—

१०७—आत्कमदा (सं० २३।१३) पत्कनीभिः (सं० १५।५८) इत्यादौ तमोः तनोर्वा योगे यः मध्ये ककारो लिखितो दृश्यते, स एव यमपरिचायक इति। यतो हि न तस्य ककारस्योच्चारणं भवति। अन्यापञ्चमपञ्चमयोगे यमपरिचायनाय न कश्चन सङ्केतः सम्प्रदाये प्रयुज्यत इति तत्र विद्वदाश्रय एव शरणम्।

१०८—वाजसनेयमाध्यन्दिनीयसंहितायाः पाठो 'दीर्घपाठः' कथ्यते। तत्र बहव आधुनिकाः ससारं प्रमाणमनुपलभमाना अपि कल्पयन्ति यत्—आसीदेतस्याः संहिताया ह्रस्वपाठोऽपि, ह्रस्वदीर्घशब्दयोः परस्परापेक्षत्वादिति। तत्र वक्ष्यमाणार्षीसंहिता (१११) विरहितो लघुपाठो ह्रस्वपाठो वा,तत्सहितो दीर्घपाठ इति। तदसत् सम्प्रदायापरिज्ञानात्। कात्यायनीये प्रतिज्ञापरिशिष्टे विसर्गानुस्वारादेरप्रसिद्धानां लघु-दीर्घ-गुरुत्वव्यवस्थानाम्, उच्चारणेऽपि 'ईषद्दीर्घता च भवति' इति विधानानां, मात्राकालदीर्घतायाश्च जागरूकत्वात्, तदुच्चारणस्य च सम्प्रदायसमधीनत्वात् सृष्टिन्यायेन (जै. १।४।१७) सर्वोऽपि पाठः शाखान्तरवैलक्षण्यद्योतनाय

कण्डिका-मन्त्रयोर्भेदः

संहितायां मन्त्रसङ्ख्या दृश्यते सा तु कण्डिका ।
स्मार्तें प्रयोगे स्युर्मन्त्राः कण्डिकान्तास्तु सर्वथा ॥१०९॥
श्रौते श्रौतप्रयोगानु-सारेण कल्पसूत्रतः ।
एकस्यां कण्डिकायां स्युर्बहवोऽपि यथावचः ।
लोके च मन्त्रशब्दोऽयं कण्डिकासु प्रयुज्यते ॥११०॥

आर्षी संहिता, विशेषश्च

बहुत्र संहितायां तु केचिन्मन्त्राः प्रतीकतः ।
उक्तास्तत्र विशेषाख्या या चा'र्षी संहिता' स्मृता ॥१११॥
सा प्रातिशाख्ये निर्दिष्टा 'संहिता' तत्र वैदिकाः ।
पारायणे तामुच्चार्य पूर्णान्मन्त्रानधीयते ॥११२॥

---

'दीर्घपाठः' इति कथ्यते । अतोऽत्र न ह्रस्वपाठपरिकल्पनावसरः इति ।

१०९–११०–यद्यपि कण्डिकासु मन्त्रशब्दप्रयोगो न श्रौतकल्पसम्मतः । परं वेदान्तरसंस्कारवशात् शास्त्रज्ञाः साम्प्रदायिकाः लौकिकाश्च सर्वेऽपि कण्डिकासु मन्त्रशब्दं प्रयुञ्जते । तदेतप्युपपद्यत इत्यन्यत्र विचारयिष्यामः ।

१११–११२–लोकं ता इन्द्रम् ( सं. १९।२२ ) इत्यादिषु मन्त्राणामाद्यपदसङ्केतेन 'तं प्रत्नथायं वेनश्चित्रं देवानाम् (सं. ३३।३३) इत्यादिषु पदद्वयसङ्केतेन च मन्त्राः संकेतिताः सन्ति । त इमे संहिताधर्मेणैव ऋषिसङ्केताः समधीयन्ते । तस्मादेषां सम्प्रदाये 'आर्षी संहिता' इति व्यवहारः । प्रातिशाख्ये त्वेषां आर्षीविशेषणविरहेण 'संहिता' (४।१८७) शब्देनैवास्ति व्यवहारः । साधारणे

गायत्रीमन्त्रे विशेषः

मन्त्रः सवितृदैवत्यो गायत्रस्तु 'तदा'दिकः।
लोकप्रसिद्धो गायत्री-मन्त्रो नाध्याप्यते स्फुटम् ॥११३॥

उपनीतावेव मन्त्रं कर्णे ह्युपदिशन्ति तम्।
नैतस्य संस्था गुणिनी कार्यते साम्प्रदायिकैः ॥११४॥

पाठकाले परित्यागः, परं पारायणे तथा।
प्रयोगे सस्वरं तस्य चोपांशुः पाठ इष्यते ॥११५॥

---

विधिनिरपेक्षे पाठे सङ्केतमात्रपाठः। पारायणे ब्रह्मयज्ञादौ तु सङ्केतात्मिकाम् आर्षीसंहितामधीत्य सङ्केतितमन्त्राणां पूर्णः पाठः क्रियते। एवमस्ति कण्डिकानुवाकसङ्केतोऽप्येतच्छब्देन (सं० ३२।३)।

११३–यद्यपि बहवो मन्त्राः सावित्राः गायत्रीछन्दस्काश्च सन्ति। परं 'तत्सवितुः' (सं० ३।३५) इत्यादिक एव गायत्रीमन्त्रत्वेन प्रसिद्ध्यति। एतस्य स्फुटम् = वाचिकधर्मेण नाध्यापनम्।

११४–मन्त्रोऽयमुपनयने गुरुणा उपदिश्यते। उपदेशश्च शास्त्रविधया प्रथमतः कर्णकुहरेण श्रावणम्। उपदेशधर्मेण प्राप्तत्वात् विशेषाराधनीयत्वात् द्विजत्वोपबृंहकत्वाद् महिम्नो गुरुत्वात् देशकालाधिकारिशौचादौ प्रमादसंभवात् सम्प्रदायस्य तादृशत्वात् गायत्रीमन्त्रस्य गुणिनी-संस्थाविधया नाभ्यासः क्रियते। ये चाधुनिकाः सर्वस्य मङ्गलमुद्घोषयन्तो मन्त्रस्यास्य सार्वजनीनत्वं स्पष्टोच्चारणं च विदधते तदसाम्प्रदायिकम्।

११५–पारायणादिविधिनिरपेक्षे न तु सर्वथा विधिनिरपेक्षे वेदपाठे एतस्य मन्त्रस्य उच्चारणं न क्रियते। वैधे पारायणे

मन्त्र-ब्राह्मणस्वरभेदनिर्देशः

मन्त्रश्च ब्राह्मणं चेति वेदः स्यात्तत्र संहिता ।
मन्त्रभागः स्मृतस्तत्र पाठस्त्रैस्वर्यतः स्मृतः ॥११६॥
ब्राह्मणे तूच्चनीचौ द्वौ स्वरौ तद्विस्तरोऽन्यतः ।

ब्राह्मणभागस्य बृहत्वं तदध्ययनस्थितिश्च

ब्राह्मणं माध्यन्दिनीयं शताध्यायात्मकं ततः ।११७॥
स्मृतं शतपथं तच्च स्यादर्थात्परिमाणतः ।
इतरेभ्यो महत् तेन सर्वं न समधीयते ॥११८॥

पूर्णशाखाध्ययनाक्षेपपरिहारः

ब्राह्मणाध्ययनाभावात् शाखा वाजसनेयिभिः ।
पूर्णा नाधीयते दोष–माक्षिपन्ति परे, परम् ॥११९॥
सम्प्रदायविदस्तत्र कथयन्ति वचो यथा— ।

---

ब्रह्मयज्ञे तु यथार्हं सस्वरं, होमादौ ह्रस्वस्वरविरहितं च गायत्री-मन्त्राध्ययनमुपांशुविधया क्रियते ।

११६—'मन्त्रब्राह्मणयोर्वेदनामधेयम्' ( प्र० प० १।२ ) तत्र मन्त्रात्मकतया वैदिकप्रसिद्धो भागः 'संहिता' संज्ञया सर्वशाखासु व्यवह्रियते । संहितायामत्र त्रैस्वर्येण सहस्तप्रदर्शनमध्ययनम् ।

११७—वाजसनेयिनां ब्राह्मणे तदन्तर्गतयोरारण्यकोपनिषदोरपि सहस्तप्रदर्शनमुदात्तानुदात्तेतिस्वरद्वयज्ञापनपरमध्ययनम् । तदेतत्स्वरद्वयं 'भाषिकम्' इति कथ्यते । यथा–ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वरौ' ( प्र० प० १।८ ) । प्रकरणान्तरादेतत् ब्राह्मणस्वरसंबन्धिविवेचनमत्र नोक्तम् ।

१२०—१२३—शुक्लयाजुषाणां स्वीये पारस्करगृह्यसूत्रे समा-

'विधिर्विधेयस्तर्कश्च वेदः' कल्पे समीरितम् ॥१२०॥
'विधिः' स्याद् ब्राह्मणं, मन्त्रः 'विधेय' इति कीर्तितम् ।
प्रयोगपाटवं 'तर्कः' सम्प्रदायात् त्रयं स्थितम् ॥१२१॥
पृथक् पृथक् त्रयं त्वेतद् वेदः सूत्रेण बोध्यते ।
तस्मात् पूर्णतया मन्त्रा-ध्ययने वेदपूर्णता ॥१२२॥
भवत्येवं ब्राह्मणस्य पूर्णाधीतौ च पूर्णता ।
श्रौतस्मार्तप्रयोगस्य ज्ञानेऽपि वेदकृत्स्नता ॥१२३॥

---

वर्त्तनप्रकरणे 'वेदं समाप्य स्नायात्' (पा० गृ० २।५।१) इति प्रक्रम्य उक्तम्—'विधिर्विधेयस्तर्कश्च वेदः। षडङ्गमेके। न कल्पमात्रे। कामं तु याज्ञिकस्य।' इति। एतानि सूत्राणि सम्प्रदायरहस्यविद एवं व्याचक्षते।—"विधिः = ब्राह्मणभागः। विधेयः = मन्त्रभागः, विधीयते विनियुज्यते ब्राह्मणवाक्येन कर्माङ्गत्वेनेति व्युत्पत्तेः। तर्कः=प्रयोगः। तर्क दीप्तौ (श० क०) तर्क्यते प्रकाश्यते वेदत्वं येन। प्रयोग एव इष्टप्राप्त्यनिष्टपरिहारद्वारा वेदस्य वेदत्वं प्रकाशयति। एतत्त्रितयं वेदः।

एतेषु त्रिषु वेदशब्दवाच्येषु एकं भागं पूर्णमधीत्य स्नायात्। एके आचार्याः षडङ्गसहितं त्रितयेष्वेकं वेदभागमधीत्य स्नायादित्याहुः। एके इत्युक्तेरनावश्यकत्वद्योतनाद् वाजसनेयिषु ऋग्वेदिनामिव न नियततया मूलमात्रं षडङ्गाध्ययनम्।

अन्याङ्गाध्ययनरहिते 'तर्क' शब्दनिर्दिष्टे प्रयोगज्ञानमात्रे अधीते सति वेदाध्ययनं नास्तीति एके आचार्याः मन्यन्ते। तत्र सूत्रकृत् सिद्धान्तयति–याज्ञिकस्य पौरोहित्यवृत्तेर्ब्राह्मणस्य तु कामं प्रयोगज्ञाने सम्पादितेऽपि वेदाध्ययनं सिद्ध्यत्येव। याज्ञिकस्येत्युक्तेः क्षत्रियवैश्ययोः प्रयोगज्ञानमात्रसम्पादने न पूर्णं वेदाध्य-

अथैतदप्यनुध्येय—मन्यवेदेषु यावता।
कालेनाभ्यसनं मन्त्र–ब्राह्मणानां तु तावता ॥१२४॥
माध्यन्दिनीयशाखाया एको भागो भवेद् ध्रुवम्।
यतो हस्तस्वराभ्यासः कृच्छ्रेण स्वात्मसादिति ॥१२५॥

पदपाठस्वरूपम्

पदपाठे संहितायाः पदानि समधीयते।
विच्छिद्य सन्धिं, तस्मात्तु स्वर-वर्णविपर्ययः ॥१२६॥
दृश्यते तस्य विज्ञानं कार्यं स्यात् पार्षदादिभिः।
न तत्र सम्प्रदायाद्धि विशेष इति नोच्यते ॥१२७॥

---

यनमिति। अत एव वाजसनेयिषु वेदपाठी ब्राह्मणपाठी श्रौती (कर्मकाण्डी) चेति ख्यातास्त्रयोऽपि वैदिकाः परिगण्यन्ते।" इति।

१२४–१२५—एवं वाजसनेयिषु मन्त्रभागस्य स्वराभ्यासनैयत्येन गुरुत्वात्, ब्राह्मणभागस्य चार्थतः परिमाणतश्च हस्तस्वरपूर्वकमभ्यासेन बृहत्त्वात्, आध्वर्यववेदे च प्रयोगपाटवस्याश्यकत्वात्, तत्राभ्यासस्य च समपेक्षितत्वात् एकैको भाग एव स्वशाखीयवेदत्वेन मन्तव्यः। त्रयाणामध्ययनासामर्थ्यस्य प्रत्यक्षसिद्धत्वात् सम्प्रदायस्य च एकैकभागाध्ययने एव वेदकात्स्न्र्यापादनात्। तत्र सम्प्रति ब्राह्मणभागस्य संभवन्ति केचिद् विरला एव स्वतन्त्राध्येतारः। मूले (१२४) ब्राह्मणानामिति बहुवचनमारण्यकोपनिषदावनुलक्ष्य।

१२६-१२७—पदपाठे सन्धिविच्छेदेन संहितायाः स्वराः वर्णाश्च विपर्यस्ता इव दृश्यन्ते। तेषां परिज्ञानं ततः सुस्पष्टं भवतीति सम्प्रदाये न तत्र विशेषः। पार्षदम्=प्रातिशाख्यम्। आदिना व्याकरणशास्त्रसङ्ग्रहः।

### पदपाठे गलत्पदानि

येषां पदानां नोक्तिः स्यात्पदपाठे तु तानि वै ।
'गलत्पदानि' प्रोक्तानि प्रतिशाख्येऽस्ति निर्णयः ॥१२८॥

### पदपाठे गलदृचः

एवं गलदृचस्ताः स्युर्येषां पाठो न विद्यते ।
पदपाठे,ऽसकृत् पाठो संहितायां च दृश्यते ॥१२९॥

### क्रमपाठस्वरूपम्

पदपाठे पठितयो-र्द्वयोः सामान्यतः क्रमात् ।
ससन्धि पदयोः पाठः क्रमपाठस्तु कथ्यते ॥१३०॥
क्वचित् तत्रापि त्रयाणां चतुर्णां वा ससन्धिकः ।
पाठो विधीयते सोऽपि प्रातिशाख्यानुसारतः ॥१३१॥

### क्रमपाठे सङ्क्रमसन्धिः

गलत्पदान्यनुच्चार्य तदाद्यन्ते पदद्वये ।
या सन्धिः क्रमपाठेऽस्ति 'सङ्क्रमः' प्रोच्यते तु सा॥१३२॥

---

१२८—यथा-वाजः । च । मे । प्रसवः । प्रयतिः । ( सं.१८।१ पद १८ । १ ) अत्र प्रसवादिपदैः साकं—च । मे—इति पदे नाधीयेते ते गलत्पदे । एवमन्यत्रोह्यम् । एतदर्थं शुक्लयजुः प्रातिशाख्यस्य चतुर्थाध्यायः ( सू० १६६-१८० ) द्रष्टव्यः ।

१२९—या ऋचः संहितायामसकृत् पठितास्तासां पदपाठे प्रथमस्थले एव पाठः, अन्यत्र तासामनिर्देश इति ता 'गलदृचः' कथ्यन्ते ।

१३०-१३१-प्रातिशाख्ये क्रमपाठप्रकरणं चतुर्थाध्याये ( सू० १८१-१९६ ) द्रष्टव्यम् ।

१३२—सन्धौ 'सङ्क्रम' शब्दव्यवहारः प्रातिशाख्ये ( ४।१६६,

विकृतिपाठः

जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः ।
पाठा इमे विकृत्याख्या अष्टौ स्युर्वेदरक्षकाः ॥१३३॥
केचिदन्ये सन्ति पाठाः सम्प्रदाये समादृताः ।
तेषामेषां स्वरूपं च लक्षणं वर्णयिष्यते ।
ग्रन्थेऽन्यस्मिन्नात्र तेषां लेखः प्रकरणान्तरात् ॥१३४॥

पाठानां साम्प्रदायिकाभ्यसनग्रन्थः

सम्प्रदाये क्रमादीनां पाठानां नास्ति पुस्तकम् ।
पदपाठस्यैव लेखे घनान्तं पाठ्यते मुदा ॥१३५॥

गुरुपरम्पराया आश्रयः

उच्चारणे वस्तुतस्तु सद्गुरुः शरणं मतम् ।
तस्मात्पूर्वैर्भारतीयै-राचार्यैः स्पष्टमुच्यते ॥१३६॥
'वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्याद् अधुनाध्ययनं यथा' ॥१३७॥

---

१६६, ८१; ३।१४६) तत्स्वरूपं चोवटभाष्ये यथा—गलत्पदमतिक्रम्यागलता (पदेन) सह सन्धानं सङ्क्रमः ( शु० प्रा० ४।८१) ।

१३३—वेदरक्षकत्वं स्वरवर्णविपर्याससम्भावनाविरहेण । एषामेव पाठानां महिमायं यद् वेदो मात्रया स्वरेणापि च न शङ्कास्पदतामेति ।

१३४—अन्ये–पञ्चसन्धियुक्तघनपाठः, पञ्चसन्धिमालायुक्तो घनपाठः, सांकलीपाठः, एवमादयः ।

१३७—मीमांसान्यायप्रकाशे ।

'कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् ।
न तस्य पाठे मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥१३८॥
सुतीर्थादागतं व्यक्तं स्वाम्नायं सुव्यवस्थितम् ।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते' ॥१३९॥

वर्णप्रकरणोपसंहारः, एतच्छिक्षान्यूनतापरिहारश्च

एवं लेखाश्रयो यश्च विशेषः साम्प्रदायिकः ।
आवश्यकः स हि प्रोक्तो नात्र शास्त्रीयविस्तरः ॥१४०॥
द्वित्व-सर्ग-यम-स्थाना-नुस्वारा-गम-सन्धयः ।
परिभाषादि सर्वत्वं शास्त्रस्यान्यत्र दृश्यताम् ॥१४१॥

विनयः

यथामति यथास्फूर्ति सम्प्रदायप्रबोधिनी ।
शिक्षैषा ग्रथिता तत्र दोषश्चेत्क्षम्यतां बुधैः ॥१४२॥

प्रसादनम्

अत्र शास्त्रं सम्प्रदायः शास्त्र-सद्गुर्वनुग्रहात् ।
नवीनसज्जामाधत्तो न नरं क्लेशयन्ति च ॥१४३॥
लोकानां सुखबोधाय सम्प्रदायप्रबोधिनी ।
मिश्र-गोपालचन्द्रेण कृता शिक्षा मनोरमा ॥१४४॥

---

१३८-१३९—द्र० पा० शि० ५०-५१ ।

१४१—शिक्षाशास्त्रस्य सर्वत्वमनयैव शिक्षया न ज्ञेयम् । इह तु पूर्वशिक्षासु स्पष्टमनुक्तानां साम्प्रदायिकानां वा मन्त्रसम्बन्धिविषयाणामेव बोधनं लक्ष्यम् ।

...नहीं मानना चाहिए यथा—

तुष्येयुस्तेन विद्वांसः श्रम-शक्तिहितैषिणः ।
आशीर्वदेयुर्येन स्यां वेद-वैदिक-सेवकः ॥१४५॥

इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः ।
गोपालचन्द्रमिश्रस्य वाङ्मात्राभिः प्रसीदताम् ॥१४६॥

—:०:—

इति काशीनिवासि—वेद-धर्मशास्त्र-मीमांसादर्शनाचार्य-
एम्. ए.-महायाज्ञिक-विद्वत्तिलक—
श्रीगोपालचन्द्रमिश्रस्य कृतौ
शुक्लयजुर्वेद-माध्यन्दिनशाखीयसम्प्रदायरक्षणशिक्षापरा
सम्प्रदायप्रबोधिनी
नाम शिक्षा समाप्ता

---

१४६—सम्प्रदायप्रबोधिन्याष्टुप्टीकेयं सुबोधिनी ।
पूर्णतामगमत्तेन वेदात्मा सम्प्रसीदताम् ॥

इति श्रीगोपालचन्द्रमिश्रकृता सम्प्रदायप्रबोधिनीशिक्षायाः
टुप्टीकात्मिका सुबोधिनी व्याख्या
समाप्ता ॥

ऋचो यजूंषि सामानि हस्तहीनानि यः पठेत् ।
अनृचो ब्राह्मणस्तावद् यावत् स्वारं न विन्दति ।।

केवल दिखावा मात्र के लिए अर्थात् स्वरज्ञान के विना हस्त-स्वर का प्रदर्शन करने से पाप का भागी होता है ।

हस्तहीनं तु योऽधीते स्वरवर्ण-विर्वाजतम् ।
ऋग्यजुः-सामभिर्दग्धो वियोनिमधिगच्छति ।।

हाथ को ठीक गोकर्णाकृति रखना चाहिए ।

उदात्त स्वर का कोई चिह्न नहीं होता, स्वरित में वर्ण के ऊपर खड़ी रेखा होती है तथा अनुदात्त में वर्ण के नीचे तिरछी रेखा होती है ।

उदात्त में हाथ मस्तक तक तथा स्वरित में नासिकाग्र या मुख की सीध में एवं अनुदात्त में हृदय की सीध में हाथ जाना चाहिए । जात्यादि स्वरों में हाथ तिरछा जाना चाहिए । साधारणतया हाथ उदात्त में—ऊपर (कन्धे के पास) स्वरित में-मध्य में तथा अनुदात्त में नीचे रहना चाहिए ।

## यजुर्वेद में—वर्णोच्चारण सम्बन्धी कुछ नियम

१—'ऋ' कार का उच्चारण 'रे' कार के समान करना चाहिए ।

२—अनुस्वार के भेद—

१—जहाँ पर 'ᳵ' यह चिन्ह हो वहाँ पर लघु=एकमात्रिक अनुस्वार जानना ।

२—उपर्युक्त चिन्ह के वाद यदि संयोग (संयुक्त वर्ण) हो तो गुरु जानना ।

३—' ' या 'ᳶ' चिन्ह हो तो वह भी दीर्घसंज्ञक है ।

उपर्युक्त चिन्हित अनुस्वार का उच्चारण 'गुं' इस ध्वनि से (लघु या दीर्घानुसार) होना चाहिए, 'ग्वं' रूप से नहीं ।

४—विसर्ग का उच्चारण हकार के समान होता है, पर इसको [illegible] नहीं मानना चाहिए यथा—

'देवो व÷ सविता' हकार के समान उच्चारण होगा ।

'देवी, हिकार के समान " "

'आखुस्त पशु' हुकार के समान " "

'अग्ने:' हेकार के " " "

'बाह्वो:' होकार के " " "

'स्वै:' हिकार के " " "

'द्यौ:' हुकार के " " "

५—'रंग' अर्थात् अर्धानुस्वार के दो भेद हैं, यथा—

"शत्रूं १।।", "लोकाँ २।।" (इसमें ह्रस्व या दीर्घ रङ्गका उच्चारण पूर्वस्वर के साथ सानुनासिक होता है) ।

६—जहाँ दो स्वर के मध्य 'ऽ' चिन्ह हो वहाँ एक मात्रा काल विराम होता है ।

७—जहाँ यकार के पेट में तिरछी रेखा हो वहाँ जकार के समान उसका उच्चारण होता है ।

८—हल् रकारका उच्चारण—

श ष ह वर्ण के पूर्व के हल् रकार को 'रे' उच्चारण करना ।

९—मूर्द्धन्य षकार का उच्चारण—

यदि ट=वर्ग=(ट ठ ड ढ ण) से युक्त न हो तो क-वर्गीय 'ख'कारके समान उच्चारण होता है ।

१०—ज्ञकार का उच्चारण 'ज्ञ'=(ज् ञ')—मिश्रित के समान होना चाहिए, महाराष्ट्रीय सम्प्रदाय में 'ग्न्य' भी कहा जाता है ।

## वेद में प्रयुक्त विशेष चिह्न

उदात्त—चिह्नरहित होता है—क

स्वरित—वर्ण के ऊपर खड़ी रेखा—क

अनुदात्त—वर्ण के नीचे तिरछी रेखा—ख

अनुस्वार ह्रस्व—ꣳ

अनुस्वार दीर्घ या ꣴ.

विसर्ग उदात्त के आगे—

विसर्ग अनुदात्त के आगे—.

मध्यावर्ती स्वरित—L या ४

अर्ध न्युब्ज तथा पूर्ण न्युब्ज—ω

## उदात्तादि स्वरों की मुद्राओंका विवरण

### उदात्तस्वर के दो भेद—

उदात्तस्वरके मुख्यरूपसे दो भद हैं 'ऊर्ध्वगामी' और 'वामगामी' उदात्तवर्णका परिचायक कोई चिन्ह नहीं होता।

प्रथम—

(क) स्वरित (ऊर्ध्व रेखा चिन्हित) वर्ण से पूर्व जो वर्ण चिह्न रहित हो तो हाथ ऊपर जायगा।

उदाहरण—"आहमजानि"

(रुद्री १।१)

(ख) न्युब्ज चिह्नवाले स्वरित से आगे और ऊर्ध्व रेखायुक्त स्वरित से पूर्व जो वर्ण चिह्न रहित हो तो हाथ ऊपर जायगा।



चित्र सं० २

उदाहरण—"बृहत्युष्णिहा" (रुद्री १।२)

द्वितीय—

वामगामी उदात्त के तीन अवान्तर भेद—

(क) दो अनुदात्तोंके मध्यमें उदात्त (चिह्न रहित वर्ण) हो तो हाथ अपनी बाँयी ओर जायगा।

उदाहरण—"गायत्री त्रिष्टुब्जगती" (रुद्री १।२)



चित्र सं० ३

(ख) वामगामी उदात्त—

मन्त्रके मध्य के निश्चित अवसान या समाप्तिके अवसान के चिन्ह रहित-वर्ण यदि अनुदात्तसे परे तथा अग्रिम मन्त्रांश अनुदात्तसे प्रारंभ हो तो हाथ बाँयी तरफ जायगा।

उदाहरण—"गर्भंधम्" (रुद्री १।१)

(ग) वामगामी उदात्त—

मन्त्रारंभका वर्ण जो अनुदात्त चिन्ह (नीचे तिरछी रेखा) से पूर्व हो तो हाथ बाँयी ओर जायगा।

उदाहरण—"य एतावन्तश्च" (रुद्री ५।६३)

इस प्रकार दो प्रकारका ऊर्ध्वगामी और तीन प्रकार का वामगामी उदात्त स्वर होता है, इसके ऊपर या नीचे कोई चिह्न नहीं रहता।

## अनुदात्त के पाँच भेद

अनुदात्त स्वरके नीचे तिरछी रेखा (क इस प्रकार) रहती है। अनुदात्त स्वर के पाँच भेद हैं। यथा—१–निम्नगामी, २–अन्त्यदर्शी, ३–दक्षगामी, ४–तिर्यग्दर्शी, ५–अन्तर्गामी। इनका विवरण—

१—निम्नगामी अनुदात्त–'अनुदात्त, उदात्त, स्वरित' इस क्रमसे वर्ण हों तो अनुदात्त चिन्हमें हाथ नीचे जायगा।

उदाहरण—"गणानान्त्वा"/

(रुद्री १।१)

२—अन्त्यदर्शी अनुदात्त—अनेक अनुदात्तस्वर (निम्नरेखा वाले) हों तो अन्तिम अनुदात्तमें हाथ नीचे जायगा।



चित्र सं० ४

उदाहरण—"व ल विज्ञाय स्थविर:"

(रुद्री ३।५)

सूचना—इन दोनों अनुदात्तों का चित्र सं० ४ में ही अन्तर्भाव है।

३—दक्षगामी अनुदात्त—'अनुदात्त, उदात्त, अनुदात्त,' इस क्रमसे स्वर हों तो प्रथम अनुदात्त में हाथ दाहिनी ओर जायगा।

उदाहरण—"पङ्क्त्या सह"

(रुद्री १।२)



चित्र सं० ५

४—अन्तर्गामी अनुदात्त—
यदि मध्यावर्त्ती स्वर (जिस स्वरके नीचे चार '४' अंक अथवा 'L' यह चिन्ह हो, वह मध्यावर्ती कहा जाता है) से अव्यवहित पूर्व अनुदात्त स्वर हो तो हाथ पेट की तरफ घूम जायगा।

उदाहरण—"च व्युप्तकशाय,
४
(रुद्री ५।२६)।



चित्र सं० ६

५—तिर्यग्दर्शी अनुदात्त—यदि अनुदात्त स परे 'न्युब्ज' चिन्ह (ω) हो तो अनुदात्तमें हाथ पिण्डदानके समान दाहिनी ओर झुकेगा।

उदाहरण—"बृहत्युष्णिहा"
ω
(रुद्री १।२)



चित्र सं० ७

## स्वरित के पाँच भेद

स्वरित स्वर के निम्नलिखित पांच भेद होते हैं। १—मध्यपाती

२—मध्यदर्शी, ३—मध्यावर्ती, ४—पूर्णन्युब्ज और ५—अर्धन्युब्ज। इसका मुख्य चिन्ह ( । ) वर्णके ऊपर खड़ी रेखा होती है।

१—मध्यपाती स्वरित

जहाँ स्वरित चिह्न (खड़ी रेखा) हो, वहाँ पर हाथ मध्यमें (हृदयकी सीध में) जाता है।

उदाहरण—"गणाना न्त्वा"

(रुद्री १।१)



चित्र सं० ८

२—मध्यदर्शी स्वरित—स्वरित वर्ण के बाद विनो चिन्हके वर्ण 'प्रचय' संज्ञक होते हैं, और वे स्वरित के स्थानमें ही दिखाये जाते हैं, इन पर कोई चिन्ह नहीं होता।

उदाहरण—"गणपति ᳪ हवामहे" (रुद्री १।१)

३—मध्यावर्ती स्वरित (चिन्ह L या ४वर्णके नीचे होता है)

जिस पदमें वर्णके नीचे 'L' अथवा '४' यह चिन्ह हो उसके पूर्व में अनुदात्त चिन्ह अवश्य रहेगा। वहां हाथ छाती के सामने रह कर अनुदात्त चिह्न में भीतर की ओर घूमेगा, और मध्यावर्ती स्वरित चिन्हमें पूरा घुमाव करके बाहर आवेगा।

उदाहरण—"च व्युप्त केशाय" (रुद्री ५।२९)

४—पूर्णन्युब्ज स्वरित—(चिन्ह ω यह है) अनुदात्त स्वरसे आगे वर्ण के नीचे 'ω' यह चिन्ह हो तथा उसके आगे अचिन्ह वर्ण के बाद 'मध्यपाती' स्वरित चिह्न '।' हो तो न्युब्जबोधी चिन्ह 'ω' में हाथ नीचे की ओर उलट जायगा।

उदाहरण—"बृहत्युष्णिहा"

(रुद्री १।२)



चित्र सं ९

५—अर्धन्युब्ज स्वरित—(चिन्ह ω) अनुदात्त चिन्हके आगे 'ω' यह चिन्ह हो और उसके आगे अचिन्ह वर्णके बाद अनुदात्त चिन्ह हो तो न्युब्ज बोधी चिन्हमें हाथ दाहिनी ओर उलटा किया जायगा।

उदाहरण—"रथ्यो न रश्मीन्"

(रुद्री १।४)



चित्र सं० १०

विशेष—'न्युब्ज' चिह्नमें अग्रिम स्वरों के सहयोगसे हाथ नीचे या दाहिनी ओर जाता है। १—अधोगामी पूर्णन्युब्जके उदाहरणके अनुदात्तमें नीचेकी ओर पिण्डदान के समान हाथ झुकेगा। २—दक्षगामी अर्धन्युब्जके उदाहरणके अनुदात्तमें हाथ दाहिनी ओर जाकर पिण्डदानके समान झुकेगा।

**विसर्गकी हस्तमुद्राके—**

विसर्गमें ये तीन चिन्ह होते हैं।

१ विसर्ग–(क) जहां विसर्गके मध्य की रेखा ऊपरकी ओर अंकित हो और ऊर्ध्वगामी उदात्त हो तो वहां पर तर्जनी अँगुली ऊपर की ओर करना।

उदाहरण—आशु शिशानो

(रुद्री ३।१)



चित्र सं० ११ (क)

(ख) और यही विसर्ग यदि वामगामी उदात्तके बाद हो तो बाईं ओर हाथ रखते हुए तर्जनी अँगुली बाहर निकालना।

उदाहरण—"सहस्राक्ष"

(रुद्री २।१)



चित्र सं० ११ (ख)



२ विसर्ग—जहां विसर्ग के मध्यमें तिरछी रेखा हो वहां पर कनिष्ठा और तर्जनी को सीधी रखते हुए मध्यमा और अनामिका को हथेलीकी तरफ मोड़ना।

उदाहरण—"सूचीभि ÷"

(रुद्री १।२)

चित्र सं० १२



३ विसर्ग—जहां पर विसर्गके मध्यकी रेखा नीचेकी ओर हो वहाँ पर कनिष्ठा अंगुलीको नीचेकी ओर करना।

उदाहरण—"पुरुष "

(रुद्री २।१)

चित्र सं० १३

**अनुस्वारकी मुद्राके दो भेद**

१ अनुस्वार—जहाँ अनुस्वार को 'ꣳ' इस रूपमें दिखाया गया हो वह एक मात्रिक या लघु है, वहाँ तर्जनी अंगूठा मिलाना चाहिए। उदाहरण—"छन्दा ꣳ सि" (रुद्री २।७)



चित्र सं० १४

२—अनुस्वार जहाँ पर 'ꣴ' या ' ' इस रूपमें दिखाया गया हो वहाँ पर केवल तर्जनी सीधी करके दिखाना चाहिए।

उदाहरण—"स भूमि ꣴ." (रुद्री २।१)



चित्र सं० १५

## अन्तिम हल् वर्णों की हस्तमुद्रा के पाँच भेद


चित्र सं० १६

१—अवसान मन्त्रार्ध या मन्त्रान्त पदपाठमें पदान्त में हल् 'क्, ट्, ङ्, ण्' हो तो तर्जनीको झुका कर दिखाना चाहिए।
उदाहरण—पदपाठ में—
"भिषक्, सम्राट्, प्राङ्, वृषण्"


चित्र सं० १७

२—अवसानमें हल् 'त्' हो तो तर्जनीको अंगूठेसे मिलाकर कुण्डलकी आकृति करना।
उदाहरण—'सहस्रपात्'
(रुद्री २।१)



३—अवसानमें हल् 'न्' हो तो तर्जनी के बगलसे अंगूठा के नख का स्पश करना ।

उदाहरण—रश्मीन् (रुद्री १।४)

चित्र सं० १८



४—अवसानके हल् 'म्' में मुट्ठी बाँधकर दिखाना ।

उदाहरण—गर्भंधम् ।

(रुद्री १।१)

चित्र सं० १९

५—अवसानके हल् 'प्' में पाँचों अंगुली मिलाना ।

उदाहरण—पदपाठ में "ककुप्"



चित्र सं० २०

## वर्जित हस्तमुद्रा

आज कल प्राय: यह देखा जाता है कि—अधिकतर स्वरसञ्चालन शिक्षारहित कर्मठवृन्द मिथ्या रूपाकृतियुक्त हस्तमुद्रा का प्रदर्शन करते हैं, अत: कम-से-कम शुद्धरूप से हस्तमुद्रा के स्वरूप का ज्ञान होने में सहायक हो इसलिए वर्जित हस्तमुद्रा के स्वरूप भी बतलाये जाते हैं। जैसा कि—शास्त्र में कहा है :—

चुलुर्नौका स्फुटो दण्ड: स्वस्तिको मुष्टिकाकृति: ।
परशुर्हस्तदोषा: स्युस्तथाङ्गुल्या प्रदर्शनम् ।।

सम्प्रदाय प्रबोधिनी शिक्षा ३४

१—चुलु (चुल्लू—आचमनमुद्रा)
२—नौका (नौका के समान हाथ)
३—स्फुट (सीधा हाथ)
४—दण्ड (चपेटा के समान हाथ)
५—स्वस्तिक (अभय मुद्रा)
६—मुष्टिक (मुट्ठी बन्द हाथ)
७—परशु (फरसे जैसा हाथ)
८—तर्जन (अंगुली से स्वर प्रदर्शन)

इन ऊपर लिखे विवरण के अनुसार नीचे नम्बरवार चित्र दिखाये जाते हैं ।



हस्तदोष १—चुलु



हस्तदोष २—नौका



हस्तदोष ३—स्फुट



हस्तदोष ४—दण्ड



हस्तदोष ५—स्वस्तिक



हस्तदोष ६—मुष्टिक



हस्तदोष ७—परशु



हस्तदोष ८—तर्जन

## ❀ लेखक की ग्र

| | | | |
|---|---|---|---|
| १. सूक्तरत्नसंग्रह [ वेद के चुने हुए | | | |
| २. पृथ्वीसूक्तम् [ पीयूष कणिका एवं | | | |
| ३. नारदीय शिक्षा [ शोभाकर भाष्य | | | |
| ४. माध्यन्दिनीय कर्मकाण्ड मन्त्र संग्र | | | |
| ५. सम्प्रदाय प्रबोधिनी शिक्षा | | | |
| ६. धर्म का स्वरूप | .... | | |
| ७. हिन्दू संस्कृति का दृष्टिकोण | .... | .... | -२५ |
| ८. भारतीय विवाह | .... | .... | -५० |
| ९. खाटू के श्री श्यामजी | .... | .... | दुष्प्राप्य |
| १०. श्रीश्यामदेव कथा | .... | .... | ,, |
| ११. कोटिहोम प्रधानाहुति मन्त्र संग्रहः | | डाक व्यय | -७५ |
| १२. क्षयमास कार्य व्यवस्था | .... | .... | -५० |
| १३. रुद्र स्वाहाकार पद्धतिः | .... | .... | -२५ |
| १४. हिन्दू कोड पर एक दृष्टि | .... | .... | दुष्प्राप्य |
| १५. यज्ञरहस्य | .... | .... | -५ |
| १६. श्रीश्यामस्तवसंग्रहः | .... | .... | - |
| १७. शिखा मुण्डन निर्णय | .... | .... | -५ |
| १८. उपाकर्म रक्षाबन्धन निर्णयः | .... | .... | दुष्प्राप्य |
| १९. शुक्लयजुः प्रतिशाख्यम् [ ज्योत्स्ना वृत्तिः ] | | .... | यन्त्रस्थ |